# मधुपर्णी

॥ प्रत्यग्रकाव्यसङ्कलनम् ॥

मिश्रोऽभिराजराजेन्द्रः
हिमाचलप्रदेशविश्वविद्यालयसंस्कृतविभागे
आचार्योऽध्यक्षश्च
समवाप्तमहामहिमराष्ट्रपतिसम्मानः




वैजयन्त प्रकाशन
इलाहाबाद

केन्द्रीयशासनार्थसाहाय्येन प्रकाशितम्

मधुपर्णी
॥ प्रत्यग्रकाव्यसङ्कलनम् ॥

त्रिवेणीकविः
मिश्रोऽभिराजराजेन्द्रः
संस्कृतविभागाध्यक्षः
हिमाचलप्रदेशविश्वविद्यालयीयः
शिमला-५

प्रथमसंस्करणम्: मार्च २००० ई०

ग्रन्थमूल्यम्: २०० = ००

प्रकाशकः
वैजयन्तप्रकाशनम्
८ वाघम्वरीमार्गः
भरद्वाजपुरम् इलाहावादम् (उ० प्र०)

# MADHUPARNI

|| An Anthology of Fresh Poems ||



**Abhirāja Dr Rājendra Mishra**
Professor & Head, Sans Deptt.
Himachala Pradesha University.
SHIMLA-5
**Recipient of the Presidential Award**



Vaijayanta Prakashana
Allahabad

Published with the Financial Help of the Central Govt.
Government of India, New Delhi.

**MADHUPARNI**

|| An Anthology of Fresh Poems ||

Triveni Kavi
Abhiraja Dr. Rajendra Mishra
Professor & Head, Sans Deptt.
Himachala Pradesha University
SHIMLA-5

First Edition : March 2000.

Price of the Book : 200 = 00

Publisher :
Vaijayanta Publication
8, Baghambari Road
Bharadwajapuram, Allahabad-6 (U.P.)
INDIA



# मधुवाक्

वाग्वधूटी-मृद्वीका-श्रुतिम्भराऽनन्तरं चतुर्थीयं गीतसङ्कलना मधुपर्णी-नाम्नी संस्कृतवर्षे शासनोद्घोषिते प्रकाश्यते। इतो दशकचतुष्टयपूर्वं काव्यवर्त्माधिरूढे मयि, मादृशेषु चान्येषु सारस्वतसगन्धेषु, गीतपद्धतिर्विरलप्रचारैवाऽसीत्। परन्तु एतावत्यवधावेव साहित्यसंरचनाविधान्तराण्यवधूय गीतपद्धतिरियं शिखरारूढा सञ्जाता। किञ्च, न तथा साहित्यविधाभिरन्याभिर्देववाणी लोकप्रियतां स्थेमानञ्चावाप, यथा गीतविधया। एतावदपि वक्तुं शक्यते यत् सरसगीतपद्धत्यैव सुरभारतीकविता सर्वजनवोध्या लोकहृदयङ्गम्या चाऽभूत्।

मधुपर्णीयं मया सहृदयानां सौकर्यार्थं त्रिधा विभक्ता-गलज्जलिकाः गीतयो मुक्तच्छन्दांसि चेति। तत्र गलज्जलिका-खण्डे तादृंशि गीतानि सन्ति यानि भाववोधरचनाशिल्पदृष्ट्या उर्दू-फारसीभाषयोर्ग़ज़लमनुहरन्ति। मम स्थापनेयम्। मदुपज्ञा गलज्जलिकाः फारसीगज़लैस्सह कियत्साम्यमूरीकुर्वन्ति? साम्यं यावत्किञ्चित् ऊरीकुर्वन्त्यपि, न वेति निर्णेतुं काव्यसमीक्षका एव प्रमाणम्।

गीतय इत्यस्मिन् शीर्षके तानि सरसमधुराणि भावसमञ्जसानि च प्रकृति-राष्ट्र-लोकसंवेदनापराणि गीतानि संकलितानि सन्ति येषु किमपि संवैधानिकं शास्त्रीयं वा नियमानुपालनं नैव वर्तते। वस्तुतो निष्प्रत्यवायाऽयत्नसिद्धा भावाभिव्यक्तिरेव गीतानामेषां जीवितसर्वस्वम्। निश्चप्रचमेतानि पारम्परिकगीतानि पारसीकगज़ल-विधातो भिद्यन्त एव।

ततश्च मुक्तच्छन्दांसीति शीर्षके ता रचना सङ्कलिताः सन्ति यासु भारतराष्ट्रस्य भव्यमतीतं वर्तमानस्य लोचनाभ्यामवलोकितं समीक्षितञ्च तिष्ठति। सुदीर्घा इमा रचनाः शिल्पप्रकृतिवशात्। यतो हि रचनास्वासु कथानायकस्य (नायिकायाः) तत्प्रतिनिधिभूतस्य कवेर्वा एकलाऽभिव्यक्तिर्महीयते[1]। क्वचित् कवेरेव स्वतन्त्राऽभिव्यक्तिः दृश्यते। रोहसेन-वसन्तसेना-वाणभट्टसम्वद्धासु रचनासु तत्तत् पात्रजातमेव प्राधान्यं भजते। परन्तु पूर्णाप्रति इतिशीर्षके महाराणाप्रतापसिंहं प्रतीति शीर्षके वा काव्ये प्रतिनिधिभूतः प्रभवति कविः। अथ चान्येषु वहुषु प्रसङ्गेषु (कविरहमस्मि, स्वप्नपरम्परा, आकाशोऽहम्) स्वयं कविरेव सर्वतन्त्रस्वतन्त्रस्सन् आत्मानमभिव्यनक्ति।

एवं हि, मधुपर्ण्यां प्रायेण सप्ततिमिता अभिनवा रचनाः प्रकाश्यन्ते। यद्यपि श्रुतिम्भरायाः (१९८९ ई०) पश्चात् मदुपज्ञा अनेकाश्चर्चितकृतयः प्रकाश्यमुपगतास्तथापि तत्तुलनायामस्य काव्यसंग्रहस्य किञ्चिद्विशिष्टमेवाधिकं

---

१. सपाटवयानीति भाषायाम्। Monologue इति वाङ्गलभाषायाम्।

महत्त्वं वर्तत इति मन्मतम्। कथमिति चेत्, स्फुटीक्रियते। प्रबन्धात्मिकाभिः कृतिभः कवेः, प्रौढिक्रमो मातुं निर्णेतुं वा न शक्यते। प्रबन्धरचनापरिशीलनाऽवधौ सहृदयपाठकस्य दृष्टिः प्रायेण कथाविन्यासोपरि केन्द्रिता जायते, मानसञ्च कथारस एव निमग्नं भवति। अतएव कवित्वस्य गुणदोषपरीक्षणेऽवसरे तस्मिन् पाठक उदासीन एव तिष्ठतीति ममाऽनुभूतिः।

परन्तु गीतपरिशीलनकाले नेयं स्थितिः। गीतेषु प्रभवति केवलं कवेर्हृदयम्। गीतेषु प्रभवति केवलं कवेः प्रतिभापरिपाकः। गीतेषु प्रभवति केवलं लोकसंवेदन-मार्दवम्। प्रबन्धकाव्यस्य कविता भवति दुरारोहा नायक-चरितानुशंसनोर्ध्वमहीधराऽरोहणकल्पा। पदे-पदे तत्र प्रत्यूहभूतास्समायान्ति गुणाऽलङ्कारीतिवृत्तिप्रभृतिनतोन्नताः शिलामेखलाः। परन्तु गीतकाव्यस्य कविता भवति सततमेव हस्तिनखप्रदेशाऽवतरणकुशला निष्प्रत्यवाया निरर्गला च गिरिनिर्झरिणीकल्पा याऽमन्दानन्दसन्दोहसिन्धुं सङ्गत्यैव विरमति। न कथमपि विरमति मध्येमार्गम्। एवं हि गीतकाव्यधारायामवगाहनसौख्यमनुभवतां सचेतसां क्व प्रबन्धपर्वताऽरोहणकष्टाऽनुभूतिः?

तदेतदुक्तं भवति यद् गीतैरेव कस्यचित्कवेः साहित्ययात्रायाः परिपक्वता, काव्यशिल्पस्य साङ्गोपाङ्गता, कवित्वस्य गुणवत्ता च साधयितुं शक्यन्ते, नाऽन्यथा। प्रबन्धकृतयः कविं निबध्नन्त्यतीतार्गलाभिः। फलतोऽसौ प्राक्तनसंवेदनायाः शिल्पस्य चाऽधमर्णीभूयाऽकिञ्चित्करस्तिष्ठति। परन्तु नवनवोन्मेषशालि गीतं रचयितारं कविं स्वयुगीनाभिः काव्यात्मक-सामाजिक-राजनैतिक-धार्मिकसंवेदनाभि-स्सम्पृणक्ति। एवं हि गीतरचनया कवेः कायकल्पो जायते। स च वयोविशेषस्य (यौवनवार्द्धक्यादेः) देहल्यां विराजमानोऽपि एष पुनर्नवीकृतोऽस्मीति मानसीं स्थितिं सुखमुपयाति।

देववाणीसुवासस्य[1] भूमिकायामर्वाचीनसंस्कृतसाहित्यस्य त्रिधा (पुनर्जागरण-कालः, स्थापनाकालः, समृद्धिकालः) कालनिर्धारणं कुर्वता मया भणितं यदर्वाचीनः (समृद्धिकालः) सुवर्णकालोऽपि कथयितुं शक्यते। वर्षारम्भेऽस्मिन् बीकानेरनगरे आयोजितायां सङ्गोष्ठ्यां केनचित् मित्रेण सुवर्णकालविषयकं तदेव मन्मतमुद्धृत्य, पृष्टं यत् सुवर्णकालानन्तरं किं भविष्यति? ततः परं को नु खलु कालः समायास्यतीति।

प्रश्नोऽयमसाधारणः प्रतिभाति। मया सप्रणयमुत्तरितं यत्सुवर्ण-कालानन्तरं कालान्तरस्य काऽऽवश्यकता? सुवर्णस्य केवलं रक्षा करणीया। सुरक्षितं सुवर्णं

१. मत्सम्पादितो डॉ० रमाकान्तशुक्लाभिनन्दनग्रन्थः।

सार्वकालिकं शाश्वतिकं वा सौख्यं सृजति। सुवर्णेनान्नपानादिकन्तु लभ्यत एव मणिमाणिक्यवैडूर्यमुक्तावज्रमणिप्रभृतीन्यपि क्रेतुं शक्यन्त एव। वस्तुतः सुवर्णमेव मूलं समेषां संसृतिसुखानाम्। साहित्य-सुवर्णमपि किञ्च, सुवर्णयुगीनं साहित्यमपि समेषां काव्यानन्दानां मूलम्। अतएव संस्कृतरचनाधर्मितायाः सुवर्णयुगमिदं सर्वथा रक्षणीयम्।

सुवर्णस्येदमेव दुर्भाग्यं यत्तस्य रक्षितारस्तस्कराश्च तुल्यबला भवन्ति। महाकविबिल्हणस्य युगेऽपीमे काव्यार्थचौराः प्रगुणीभूता आसन्। इदानीमपि प्रवल्गन्ते तादृशाः सुवर्णविरोधिनस्सुवर्णचौराश्च। ये खल्वशुद्धां भाषां प्रयुञ्जन्ति, ये खलु देववाण्याः सरलीकरणव्याजेन तां विरूपां विकृतां वा विधातुं समीहन्तेऽभिनवपाणिनिसमज्ञालोलुपाः, ये वा स्वोपज्ञामष्टाध्यायीमनुसरन्तः सन्धिसमासादिविरहितवाक्यरचनाभिः संस्कृतभाषां लोकप्रियां लोकोपयोगयोग्याञ्च साधयितुकामास्ते सर्वेऽपि सुवर्णविरोधिन एव, सुवर्णचौरा एव। देववाणी-संरक्षणव्याजेन ते स्वार्थमात्रं रक्षन्तीत्यवगन्तव्यम्। प्रतिभाविहीनानामशक्तानां किञ्च गन्धद्रव्यापणीकृतसंस्कृतसपर्याणां कृते सर्वत्र काठिन्यमेव, कृच्छ्रमेव! परन्तु पृच्छाम्यहं यत्पारसीकभाषाप्रभुत्वभरिते विसंवादिनि खिलजी-तुगलक-लोदि-मुगलकाले संस्कृतस्य सरलीकरणं कथं नाऽनुभूतं लोकैः? सरसमधुरगीतानि प्रणयताऽपि जयदेवेन कथं न सन्धिनियमा उपेक्षिताः! समासविधिर्वा सन्त्यक्तः? किमेतत्सर्वमकृत्वा जातं देववाण्याः किमप्यहितम्?

अतएव सप्रणयं प्रार्थ्यते मया यत्सनिष्ठमाराधयन्तु भगवतीं वागधिष्ठात्रीम्। तत्कृपयैव सर्वं सेत्स्यति। आत्मना संस्कृतरक्षणं विहाय कृपया संस्कृतेनात्मानं रक्षन्तु। क्षणभङ्गुरं मानवजीवनम्। शाश्वतिकम्पुनस्संस्कृतम्। अनित्येन नित्यस्य रक्षेत्युपहासास्पदमेव।

एतावन्मात्रं विनिवेद्य मधुपर्णीमिमां सहृदयरसिकेभ्यो नमस्यापुरस्सरं समर्पयामि।

रक्षाबन्धनपर्व
२६ अगस्त, १९९९ ई०
शिमला (हि०प्र०)

सहृदयवशंवदः
मिश्रोऽभिराजराजेन्द्रः



# गीतानुक्रमणिका




तृतीयखण्डः मुक्तच्छन्दांसि

# धूमतां यामो वयम्

अपि हविर्भूता मखाग्नौ धूमतां यामो वयम्
धूमतो घनतां गता हविरेव जनयामो वयम् ॥१

वर्तुलो जनिमरणपरिधिर्हन्त भूमण्डलनिभः
प्रस्थिता विन्दोर्यतस्तत्रैव विहरामो वयम् ॥२

शून्यमेव विरौतु मां लोको, न दैन्यमुपैम्यहम्
योजिता अङ्केन शनकैर्लक्षतां यामो वयम् ॥३

चिन्वता सुमनोधिया मां नोचितं भवता कृतम्
परिमलैर्वासन्तिकैः श्वसितानि कलयामो वयम् ॥४

ताडयाऽलं, पीडया सख्यं घनीभूतं नु मे
कण्डिनीकलमाः सखे! वैशद्यमुपयामो वयम्॥५

आहतास्तनुकं, रुदित्वा ये खलत्वमुपागताः
तादृशा न तिलास्समग्रं स्नेहमतियामो वयम् ॥६

सञ्चिनोतु सुखं स्वकीयं, बन्धुनिवहार्थं भवान्
वन्यतृणकल्पाभिराजं साधु निवपामो वयम् ॥७



## सोढं, चिरं सोढम्

वैशद्यमाप्तुं ज्वलदनलपिण्डैर्मया संक्रीडितम्
सोढं, चिरं सोढं, धृतं संघर्षनिवहैर्जीवितम् ॥१

सुप्तं भुजङ्गेष्वनुदिनं, कण्ठे कृतं हालाहलम्
त्रिपुरारिगेहिन्यै मया सततं श्मसानमुपासितम् ॥२

प्राप्ते विलासिवसन्तकेऽपि गता क्वचिन्न करीरता
गोविन्दराधातुष्टये श्वसितम्मया खलु शिक्षितम् ॥३

नो ज्ञायते, दुःखैः सुखैर्वा पूर्णमवसानं व्रजेत्
सर्वाणि सूत्रकदम्बकानि मया कथायै संहृतम् ॥४

धनिकोऽभवं सततं नयनपुञ्जीकृताऽमितमौक्तिकैः
अञ्जलिमिमं विनिवेद्य किन्तु, जलं कमपि नो याचितम् ॥५

गीतं प्रणयरतिगीतकं निभृतं व्यथाभरसङ्कुलम्
कवनं तथाऽप्यवमत्य रसिकेतरमनो न निषेवितम् ॥६

मुञ्जो मयाऽपि विलोकितः कश्चित्पुनर्निजजीवने
न मृतस्तथापि हरीच्छया धाराऽऽश्रितं सुखमञ्चितम् ॥७

सकृदुत्पतिष्यति, भूतलं प्रविहाय विहगोऽयं यदा
अवशिष्टपंक्तिसमुच्चयैर्भविताऽभिराजमधुस्मृतम् ॥८

●

## न हन्तव्यो, न हन्तव्यः

विरम विरम क्षणं राजन् ! न ते धानुष्कताऽवसरः
गुरोराश्रममृगोयम्भो न हन्तव्यो, न हन्तव्यः[१] ॥१

शरास्ते वज्रसाराः क्व क्व चेदं मृदु मृगाऽयतनं
कुसुमपुञ्जे करालोऽग्निर्न रङ्क्तव्यो न रङ्क्तव्यः ॥२

भवानग्रेसरो राजन्! जनानामर्हतां लोके
अतोऽध्वा कोऽप्यमर्यादो न गन्तव्यो न गन्तव्यः ॥३

इयं गुरुनन्दिनी मे सत्क्रिया स्वयमेव मूर्तिमती
अतस्सत्कारसत्करणे न यन्तव्यो न यन्तव्यः ॥४

भवेत्कालस्य राजा कारणं नात्रास्ति संशीतिः
अतः खलु भूभुजा कालो न रन्तव्यो न रन्तव्यः ॥५

तपोवनरक्षितरि सत्यप्यरक्षितमेव यदि गहनं
हता वयमेव, विश्वासो न भङ्क्तव्यो, न भङ्क्तव्यः ॥६

प्रशासति पौरवे नृपतौ निरातङ्का धरित्रीयम्
ततोऽन्यः कोऽपि दुष्यन्तान्न नन्तव्यो न नन्तव्यः ॥७

ध्रुवं भाग्योदयोऽस्माकं भवन्मुखचन्द्रिका दृष्टा
क्षणस्थायी सतां सङ्गो न सङ्क्तव्यो न सङ्क्तव्यः ॥८



---

१. शाकुन्तलप्रसंगमनुहरति गीतमिदम्।

# दर्पणोऽहं मृषा नैव भाषे

आन्तरज्योतिषैव प्रकाशे
दर्पणोऽहं मृषा नैव भाषे ॥

सत्यमास्ते मदीये निसर्गे
नावसक्तो गुणे नापि वर्गे।
नापि सन्धौ रतिर्नो समासे
दर्पणोऽहं मृषा नैव भाषे ॥१

यो यथा, तं तथा दर्शयेऽहम्
रावणञ्चापि नो मर्षयेऽहम्।
नैरपेक्ष्यं विलापेऽथ हासे
दर्पणोऽहं मृषा नैव भाषे ॥२

पद्मिनीरूपसिन्धौ प्रलीनः
मामलं वेद सोऽलाबदीनः[1]।
योऽभवन्नामशेषो हुताशे
दर्पणोऽहं मृषा नैव भाषे ॥३

सृष्टिसत्यस्य दृष्टान्तभूतः
सम्मतोऽहं चिदाभासपूतः।
ब्रह्मरूपोऽस्मि पिण्डावकाशे
दर्पणोऽहं मृषा नैव भाषे ॥४

नो तमोभिस्समं मत्प्रबन्धः
नाऽपि धृतराष्ट्रपक्षेऽनुबन्धः।
तत्त्वभूतोऽस्म्यहं चिद्विलासे
दर्पणोऽहं मृषा नैव भाषे ॥५

●

---

१. अलाउद्दीन खिलजीति दिल्लीसुरत्राणः।

# सा मधुयामिनी निरर्था

सा मधुयामिनी निरर्था, नो यस्यां शयनेच्छा
सा खलु कामिनी निरर्था, नो यस्यां मदनेच्छा ॥१

व्यर्थोऽसौ प्रावृट्कालो यस्मिन्निर्घनं नभः
सा कादम्बिनी निरर्था, नो यस्यां वर्षेच्छा ॥२

कीदृशो वसन्तो यस्मिन्नवतां नो याति वनी
वल्लरी च सापि किमर्था नो यस्यां कुसुमेच्छा ॥३

नोन्मदयति मन्द्रनिनादैः क्लीवोऽसौ वारिधरः
मायूरी मुदपि निरर्था नो यस्यां नृत्येच्छा ॥४

यौवनं व्यंसकं तद्भोः प्रोन्माथि न यद्गाढम्
कामनाऽपि सा खलु वन्ध्या नो यस्यां वरणेच्छा ॥५

दम्भोलिनिभं हृदयं तद् बध्नाति न यत्सहसा
सा प्रीतिरपि व्यर्था नो यस्यां संविलयेच्छा ॥६

संस्पृशति करै रजनीशश्चुम्बति च परिष्वजते
हतभाग्या कुमुदवनी सा नो यस्यां रमणेच्छा ॥७

उप्तं भवता यद्बीजं शब्दानां मरुभूमौ
सा कृष्टिरधन्या जाता नो यस्यां स्फुरणेच्छा ॥८

त्वदघोरघण्टता नष्टा नोत्तस्थौ वेतालः
दृश्यते कुतोऽपि न मृतके तृणकल्पा स्पन्देच्छा ॥९

कुप्यति सम्प्रत्यभिराजो नो कस्मैचिदपि कदापि
ननु भाग्यलिपिर्जयतेऽसौ नो यस्यां स्खलनेच्छा ॥१०

●

# मे मनो लग्नम्

रोदरीभूय मे मनो लग्नम्
सोदरीभूय मे मनो लग्नम् ॥१

मेनकां त्वां निजाश्रमे लब्ध्वा
कौशिकीभूय मे मनो लग्नम् ॥२

वातलोलं तवाञ्चलं दृष्ट्वा
कण्टकीभूय मे मनो लग्नम् ॥३

पार्वणं प्रेक्ष्य हन्त वक्त्रेन्दुम्
सागरीभूय मे मनो लग्नम् ॥४

चञ्चलं प्रेक्ष्य भाग्यपाठीनम्
धीवरीभूय मे मनो लग्नम् ॥५

चर्चिते सीम्नि ते विलासानाम्
याचकीभूय मे मनो लग्नम् ॥६

प्रीतिपत्रेऽर्ध एव मुक्तेऽपि
वाचकीभूय मे मनो लग्नम् ॥७

सूत्रधारस्य तेऽवितुं नाट्यम्
मारिषीभूय मे मनो लग्नम् ॥८

कोविदं त्वां जनेषु साधयितुम्
बालिशीभूय मे मनो लग्नम् ॥९

भाग्यसौधे समुत्थितेऽन्येषाम्
शेखरीभूय मे मनो लग्नम् ॥१०

अस्ति नास्तीति ते कटीवादे
मेखलीभूय मे मनो लग्नम् ॥११

●

## भिल्लिके ! कटाक्षस्ते

दुनोति मे हृदयं भिल्लिके! कटाक्षस्ते
तनोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥१

मधूकगन्धनिभैः सौरभैर्हृषीकाणाम्
वृणोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥२

अपाङ्गभङ्गचयैर्निर्दयं दृढं वद्धवा
सुनोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥३

अनंङ्गसिद्धिमखे सम्परीतदीक्षोऽयम्
जुहोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥४

क्व यातु हन्त मृगोऽनुद्रुतश्चिरं व्याधैः
मिनोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥५

गिरौ मरौ च वने सागरेऽथवाऽऽकाशे
हिनोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥६

निदाघदग्धमहो गूहितं धरागर्भे
धिनोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥७

अलातचक्रनिभं जीवनेऽभिराजं माम्
करोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥८

रतिश्लथोऽपि चिरं जीवितुं सदाऽसक्तः
क्षिणोति मे हृदयं भिल्लिके! कटाक्षस्ते ॥९



# वृथा जल्पन्ति

वृथा जल्पन्ति पण्डितमानिनो जगतां नियन्तारः
अहं पुनरात्मन्थनयैव वचसां सङ्गतिं जाने ॥१

भवेद् वेदान्तिनां भ्रान्तिः क्वचिद्रज्जौ भुजङ्गानाम्
त्वदीये वाहुपाशे भ्रान्तिकोटिनिराकृतिं जाने ॥२

न मे व्यङ्ग्ये, न लक्ष्ये, नापि वाच्यार्थे मनागास्था
प्रिये! तव वल्गुविब्वोकैः पदानामन्विर्तिं जाने ॥३

अहं ते त्वञ्च मे सुन्दरि! न खलु सम्वन्धमात्रमिदम्
क्रियान्वयिकारके प्रथमां विभक्तिं दम्पतीं जाने ॥४

निपीतं खफछठथचटतवकपयशषसरहलिति वाल्ये
परं स्त्रीप्रत्ययैः शब्दानुशासननिष्कृतिं जाने ॥५

प्रमाकरणं प्रमाणं मन्वते यदि तार्किकप्रवराः
प्रिये! सर्वप्रमाणानां ध्रुवामाविष्कृतिं जाने ॥६

तवाऽकाङ्क्षा मदीया योग्यता सन्निधिरथाप्युभयोः
ध्रुवं जयदेवकल्पस्त्वामहं पद्मावतीं जाने ॥७

अभिव्यक्तिर्न भुक्तिर्नानुमितिरथवा न वोत्पत्तिः
रसानां केवलं त्वदपाङ्गभङ्गपुरस्कृतिं जाने ॥८

अलङ्कारैर्वचोव्यङ्ग्यै रसैर्वक्रोक्तिभिर्जटिलाम्
समेषां सम्प्रदायानां मनोज्ञामौचितीं जाने ॥९

झटित्यवभासते वुद्धौ विशति हृदये रसज्ञानाम्
मसृणमधुराऽभिराजीयां गलज्जलिकाऽऽयतिं जाने ॥१०

●

# दृष्ट्यैव ते

शतकोटिशङ्काऽऽतङ्किते नैराश्यनदलहरीवृते ।
गहनान्धकारे मम सखे ! दृष्ट्यैव ते दिवसायितम् ॥१

मृगशावकल्पः कानने भ्रान्त्वा यदा गृहमागमम् ।
कुशसूचिविद्धे मन्मुखे दृष्ट्यैव तेऽतिविषायितम्[1] ॥२

कथमपि यदा तव विप्रियं कृत्वाऽभवं लघुविक्रमः ।
ननु वृत्रकल्पे मम वपुषि दृष्ट्यैव ते कुलिशायितम् ॥३

पिहितं परीतं गोपितं किन्नो प्रधाव्य मया कृतम् ।
मयि कान्दिशीके चिलिचिमे दृष्ट्यैव ते बडिशायितम् ॥४

वहुभिः प्रयत्नैर्निर्मितो मयकाऽभिलाषसुरालयः ।
प्राक्त्वत्समर्चनतोऽनघे! दृष्ट्यैव ते कलशायितम् ॥५

विगताः कियन्तो वासराः कति-कति निशाः कति वत्सराः ।
न तथापि किञ्चिदवेदिषं दृष्ट्यैव ते निमिषायितम् ॥६

विपरीतरतिरियमद्भुता ननु सङ्गमेऽनुगताऽऽवयोः ।
प्रणयेन मम गिरिजायितं दृष्ट्यैव ते गिरिशायितम् ॥७

चरितुं धरा न लघीयसी वनवाटिकादिसमन्विता ।
कुर्याच्चिमूरुरयं नु किं दृष्ट्यैव ते यवसायितम् ॥८

विधिरपि न जानीयाद्यथा हृदयं तथा त्वयि मज्जितम् ।
न परं रहस्यमभूच्चिरं दृष्ट्यैव ते रभसायितम् ॥९

●

---

१. अतिविषा विशल्यकरौषधिविशेषः।

# स्फुटं मर्म किं नोऽभिराजस्वराणाम्

क्षणस्थायिता दृश्यते सङ्गमानाम्
धराशायिता लक्ष्यते जङ्गमानाम् ॥१

समाम्नात-विस्मारितं प्रत्नवृत्तम्
जगत्सन्ततं भासते भावनानाम् ॥२

प्रतीक्षावधिर्भोगसौख्यं वियोगः
निमेषत्रयं केवलं जीवनानाम् ॥३

विवादः कथं तन्यते कालिदासे ?
न मुक्तिस्ततो यत्र सीतापतीनाम् ॥४

समुड्डीय चेरुः सुखं पक्षतीभ्याम्
कदाऽऽवर्तते सद्युगं भूधराणाम् ??५

विवर्धस्व भो शाठ्य! लब्ध्वा प्रतिष्ठाम्
किमन्यद् भवेद् राजधर्मः शठानाम् ??६

वृथा मुद्रिका भूपनामाङ्किताऽपि
न सौख्यं यया योषितां धीवराणाम् ॥७

धनाच्छादिते व्योम्नि हा दुर्विपाकः
न दूर्वासुखं, नो सुखं भास्कराणाम् ॥८

अमृतवल्लरी निम्बशाखाऽवसक्ता
इदं प्रायशो हन्त विम्बाधराणाम् ॥९

किमद्यापि पापक्षयो गाङ्गनीरैः
स्वयं पापिभिः शोधनं यज्जलानाम् ॥१०

सदा वच्मि वक्रं, कुतोऽयं प्रवादः
स्फुटंमर्मकिंनोऽभिराजस्वराणाम् ॥११

●

# यतस्तातस्य कूपोऽयम्

तिरस्क्रियते पुरःस्था हन्त मधुसलिलाऽपि पुष्करिणी
पिवन्त्यम्भो जनाः क्षारं यतस्तातस्य कूपोऽयम् ॥१

प्रयातो नित्यपिच्छिलतां नदीनामवतरणमार्गः
निवध्नन्त्यश्मभिर्घट्टं यतस्तातस्य कूपोऽयम् ॥२

पिशाचा डाकिनीरसिका निशीथेऽन्यत्र ढौकन्ते
विधीयन्तेऽत्र संस्कारा यतस्तातस्य कूपोऽयम् ॥३

प्रवलझञ्झानिलैरुत्पाटिता छदिरीक्ष्यते न मनाक्
सयत्नं छाद्यते परिधिर्यतस्तातस्य कूपोऽयम् ॥४

हतो भवितास्म्यहं स्वयमेव जाल्मान् वा शुनीशावान्
हनिष्याम्यद्य मानार्थं यतस्तातस्य कूपोऽयम् ॥ ५

वराकी निपतिता गोधा प्रवयसां भोगिनां मध्ये
सुखं सर्वेऽत्र राजन्तां यतस्तातस्य कूपोऽयम् ॥६

पुनारचना भवेत्कूपान्तराणां काऽत्र नो हानिः
न मे शासनकृपाकाङ्क्षा यतस्तातस्य कूपोऽयम् ॥७

न कस्मिन् हायने विहिता मया राष्ट्रम्भरी यात्रा
न पीतं गृहजलादन्यद् यतस्तातस्य कूपोऽयम् ॥८

मरणकालेऽपि मद्व्यायतमुखे देयं न गाङ्गजलम्
जलेनास्यैव मे मुक्तिर्यतस्तातस्य कूपोऽयम् ॥९

# क्व याताऽधुना?

क्व याताऽधुना शर्वरी सान्त्वनानाम्?

प्रसुप्तं निरातङ्कमङ्के जनन्याः
क्व याताऽधुना माधुरी चुम्बनानाम्? १

सदाऽऽकाङ्क्षितो मातुलीभूतचन्द्रः
क्व याताऽधुना नागरी कामतानाम्? २

त्रिलोकार्पणं सम्भवं त्वत्कटाक्षे
क्व याताऽधुना शाम्बरी यौवनानाम्? ३

न यात्रा दिने, नैव निद्रा निशीथे
क्व याताऽधुना चर्चरी स्यन्दनानाम्? ४

प्रसूनाऽन्विता वृन्तवृन्देषु याऽभूत्
क्व याताऽधुना वल्लरी भावनानाम्? ५

न साम्यं दधे वल्लकीवेणुनादः
क्व याताऽधुना वैखरी त्वन्मुखानाम्? ६

नदन्तोऽनिशं वारिदा व्योम्नि रेजुः
क्व याताऽधुना झल्लरी श्रावणानाम्? ७

प्रवृत्ता, गता, नष्टदृष्टा क्षणार्धे
क्व याताऽधुना सा तरी स्पन्दनानाम्? ८

त्रिपादच्छलेनैव सिद्धा त्रिलोकी
क्व याताऽधुना चातुरी वामनानाम्? ९

त्रपन्ते न ते वञ्चयित्वाऽभिराजम्
क्व याताऽधुना मौखरी सौहृदानाम्? १०

●

## मदपेक्षयाऽपि कृतं सखे

अलमलमित रहितचिन्तया मदपेक्षयाऽपि कृतं सखे
साधय समीहितमङ्गलं वर्त्मनि शिवं ते वर्तताम् ॥१

स्यात्तव विडौजाः प्राज्यवृष्टिर्जीवने नु समन्ततः
तृषिते हि मम चातकमुखे स्वात्यम्बुकणिका राजताम् ॥२

तव सौधकल्पे मन्दिरे दीपा ज्वलन्तु सहस्रशः
सा दृष्टिरेका चिन्मयी मम तृणकुटीरे भासताम् ॥३

विलसन्तु तव सदनाऽजिरे वकुलाः कदम्बाश्चम्पकाः
दूर्वातलिच्छकमेव लघु गृहकोणके मम शोभताम् ॥४

भूयात्कुशेशयमृदुरजोनिचितो हि तव यात्रापथः
वैयर्थ्यमसकृत्सङ्गता मम सा प्रतीक्षा वंहताम् ॥५

दिवसा भवन्तु विकस्वरा ज्योत्स्नासितास्तव रात्रयः
खद्योतविद्योतितमुखी सन्ध्यैव मम हृदि कल्पताम् ॥६

दधिदुग्धघृतनद्यो वहन्तु सदैव नीवृति भद्र! ते
शापितमनोरथजीविनी गङ्गा मदश्रुणि मोदताम् ॥७

गीयेत नाम सितं यशस्तव किन्नरीभिरनारतं
सुहृदाम्मनसि मधुसंस्मृतिर्मे केवलं चिरमश्नुताम् ॥८

अर्च्येत जयजीवस्वरैस्तव साधुलोकैः सिन्धुता
याचेऽनिशं जगदीश्वरं मम विन्दुतैव महीयताम् ॥९

सा तव विलक्षणसंकथा प्रसृता यथा प्रतिवीथिकं
अभिराज एष समीहते चान्द्री कलेव विवर्धताम् ॥१०

●

## अतः परं किं भविता

अत: परं किं भविता भूतले विचित्रम्
आत्मानं वायसोऽपि मन्यते पवित्रम् ॥

वेशयोषितां वृन्दे शीलगता चर्चा
मलिम्लुचानां गेहे शाम्भवी समर्चा ॥

अत: परं किं भविता भूतले विचित्रम्
मन्यते हुताशो यदि शुष्कतृणं मित्रम् ॥१

नित्यलम्पटाः शिविकारक्षणे नियुक्ताः
न्यायाधीशास्त एव ये प्रागभियुक्ताः ॥

अत: परं किं भविता भूतले विचित्रम्
कृषिं निशितधारं यदि त्रायते दरित्रम् ॥२

कदलीसङ्गतिं हन्त वाञ्छति वर्बूरः
चुचुम्बिषति नीलनभः खर्वः खर्जूरः ॥

अत: परं किं भविता भूतले विचित्रम्
यतते निर्मातुं यदि जलवक्षसि चित्रम् ॥३

रावणश्छलयते सीतां भूत्वा दण्डी
पार्थं पृष्ठे कृत्वा युध्यते शिखण्डी ॥

अत: परं किं भविता भूतले विचित्रम्
शिक्षन्ते हंसा यदि बकेभ्यश्चरित्रम् ॥४

प्रतिशाखं चन्दनेषु वेष्टिता भुजङ्गाः
मानवैः पवित्रीक्रियते सम्प्रति गङ्गा ॥

अत: परं किं भविता भूतले विचित्रम्
भवसिन्धोः सन्तरणे छद्मनां वहित्रम् ॥५

●

## प्रतिशाखमुलूका वल्गन्ते

धृष्टं न कियद्वारं निकषे
क्षिप्तं कतिधा न दहज्ज्वलने !
पीडा नहि तेन तथा हेम्नः
सम्प्रति यादृग् गुञ्जातुलने ॥१

रुष्टः पिकहतकः केलिवने
अवगमयेत्कस्तं मूढधियम् ।
प्रतिभाता प्रीतिरियं सीता
याऽऽजीवनमवसीदति विपिने ॥२

तरणीयुगले संस्थाप्य पदौ
कामं शक्या न सलिलयात्रा ।
नावं परिवर्त्य परं क्रमशः
कष्टं न मनागपि सन्तरणे ॥३

उद्याने यस्मिन् सान्द्रतरौ
प्रतिशाखमुलूका वल्गन्ते ।
कल्याणं तस्य कथं भविता
सुषमा क्व वसन्तस्यागमने ॥४

जीवनं व्यतीतं व्याधगृहे
पञ्जरनिगृहीतं कीरस्य ।
न शशाक वराको मित्रवृतो
ननु नीलनभोऽङ्गणसञ्चरणे ॥५

दुह्यन्ति रसालेभ्योऽतितरां
पिचुमन्दा मौकुलिभिर्लसिताः ।
प्रयतन्ते तिक्तफलानां ते
शासनतन्त्रैर्मधुरीकरणे ॥६

प्रतपति धृष्टे सूकरपाले
मा पृच्छ सखे! परिचयसूत्रम् ।
ग्रामेऽस्मिन् यान्ति भयं लोका
आत्मद्विजतायाः संल्लपने ॥७

ह्यस्तने सान्ध्यकालेऽपि च ये
भैक्ष्यं चक्रुर्द्वाराद्‌वारम् ।
शासति ते हन्त! कियच्चित्रं
प्रतिषेधधिया निखिले भुवने ॥८

मारवी धराऽपि ललास दिन-
द्वितयं वनजाराणां[१] सख्यैः ।
किन्त्वधुना तेषु गतेषु पुनः
स्पर्धते धूलिवात्या गगने ॥९

यवना गौराङ्गा आयाता
न तथापि देववाणी शीर्णा ।
सन्ततिभिरेव किन्त्वधुनाऽसौ
नाङ्गीक्रियते स्थातुं सदने[२] ॥१०

भुक्तं राष्ट्रेण न हा किं किं
कृच्छ्रं स्वजीवने कीर्तिहरम् ।
संस्मृतस्तथाऽपि कदापि मनु-
र्दुर्वचनैर्नैव सभाभवने ॥११

यदि नाम दुर्व्यवस्थामात्रं
कथ्यते लोकतन्त्रं कैश्चित् ।
स्वस्त्यस्तु तर्हि लुण्ठाकेभ्यः
कुर्वन्तु रतिं गुणिनो मरणे ॥१२

जीवनं व्यतीतं यथायथं
चिन्तयते नात्मन्यभिराजः ।
किं भविता प्रभासुतानां हा
रात्रौ, खद्योतानां शरणे ॥१३

●

१. वञ्जारा इति भाषायाम्। २. संसदीति।

## तव स्मरणम्

मनो नित्यं विधत्ते तव स्मरणम्
यथा दीनोऽसहायो व्रजति शरणम् ॥१

यदा पर्येति भृङ्गो जलजकलिकाम्
मनोऽधीरं विधत्ते तव स्मरणम् ॥२

यदाऽऽकाशे प्लवन्ते सजलजलदाः
मनो भ्रान्तं विधत्ते तव स्मरणम् ॥३

यदा प्राच्यां प्रदोषे विधुर्दयते
मनो मुग्धं विधत्ते तव स्मरणम् ॥४

यदा पुंस्कोकिलो रौति माकन्दके
मनो व्यग्रं विधत्ते तव स्मरणम् ॥५

उच्छलन्त्यापगायां यदा शफराः
मनोऽशान्तं विधत्ते तव स्मरणम् ॥६

काशते मेघपृष्ठे यदैन्द्रं धनुः
मनश्चित्रं विधत्ते तव स्मरणम् ॥७

यदा विद्युद्घने कौति कूकूरुतम्
मनो मुक्तं विधत्ते तव स्मरणम् ॥८

पुरो नृत्योद्यतं प्रेक्ष्य पारावतम्
मनो रक्तं विधत्ते तव स्मरणम् ॥९

यदा संल्लेढि कान्तं मुदा सन्धिनी
मनोऽभीकं विधत्ते तव स्मरणम् ॥१०



यदा पृष्टाऽसि 'भाभीति' सम्वोधनैः
मनो मन्दं विधत्ते तव स्मरणम् ॥११

●

# सुन्दरी न दरी

रता परेशपदाब्जेषु यन्मनोभ्रमरी
प्ररोचते खलु तस्मै न सुन्दरी, न दरी ॥१

लवोऽपि येन पराम्वासमृद्धिजोऽवाप्तः
अपेक्ष्यते न तदर्थं भवाब्धिपारतरी ॥२

स कालिदास इदानीं स भारविर्माघः
यमाश्रिता श्रितहंसा विरञ्चिहर्म्यनरी[1] ॥३

स राघवोऽद्य मतङ्गाश्रमे पदं धत्ते
तृणाय मोक्षसुखं मन्यते ततश्शवरी ॥४

न नर्मदा न सखायः करेणवः कलभाः
भुनक्ति कं न दुराधिं नृपाजिरेषु करी ॥५

न किं त्वयाऽस्ति समं मामकं दृढं सख्यम्।
तवाङ्गणे मम याने च राजते वदरी ॥६

ध्रुवं त्वमेव गुणाढ्योऽसि तत्र का शङ्का
पिशाचवाचि तथा दृश्यते त्वदीयझरी ॥७

स्वजीवनस्य विभुत्वं मयैव निर्व्यूढम्
न वर्ततेऽत्र पताका न चाऽथवा प्रकरी ॥८

त्वरेत हन्त कथं वायुनन्दनो, मिलितौ
स कालनेमिगुरुः सा च वापिका-मकरी ॥९

●

---

१. नरी गृहिणी। सरस्वतीति।

# क्व यामो वयम्

व्योम्नि नैराश्यमूर्व्यामविश्वस्तता
भ्रान्तिकुन्ते दिगन्ते क्व यामो वयम्? १

वेष्टितं चन्दनं क्रूरकाकोदरैः
दुर्विषं गन्धवाहे क्व यामो वयम्? २

शैशवे यत्र वाट्यां मुदा क्रीडितम्
डाकिनी तत्र शेते क्व यामो वयम्? ३

पुष्पबुद्ध्याऽङ्गणे रोपिता मल्लिका
कण्टकास्तत्र जाताः क्व यामो वयम्? ४

पाठितो रामनाम प्रयत्नैश्शुकः
भाषते दुर्वचोभिः क्व यामो वयम्? ५

पामरैर्दूषितो ग्रामवासोऽधुना
राजधान्यां हवाला क्व यामो वयम्? ६

लौहकारोऽग्निजीवी वसत्यन्तिके
तार्णमस्मत्कुटीरं क्व यामो वयम्? ७

वेदविद्यागजं ग्राहतो मोचितुम्
ते विमानैः प्लवन्ते क्व यामो वयम्? ८

सांसदो वल्लभस्साम्प्रतं दृश्यताम्
वल्गते शौण्डिकीत्थं क्व यामो वयम्? ९

नाट्यदक्षा ध्रुवं कान्यकुब्जेश्वराः
धावकानां महिम्ना क्व यामो वयम्? १०

ये हि वैशेषिकास्ते कणादा युगे
ये जडास्ते कुबेराः क्व यामो वयम्? ११

येन चन्द्रेण गौरीमुखं मीयते
तत्कलाद्वेषिणी सा क्व यामो वयम्? १२

काव्यगोष्ठ्यां कवीन्द्रा अनेके परम्
नागतोऽत्राऽभिराजः क्व यामो वयम्? १३



# कीदृशमिदं विधानम्

क्वचिच्छकटिका नौकोपरि नौका वा क्वचिदधियानम्
कीदृशमिदं विधानं शम्भो! कीदृशमिदं विधानम् ॥

शाखोटकाः फलन्त्युद्याने मधुरसचूतफलानि
चूतद्रुमाः समवलोक्यन्ते तिक्ताऽलावुयुतानि
कण्ठीरवं निहन्ति कुक्कुरो भयविद्रुतं शयानम् ॥१

कनकपञ्जरस्थिता वायसा दधिभक्तं भोज्यन्ते
जर्जरकण्ठाः शुकाः सारिका असकृन्निर्भर्त्स्यन्ते
धेनूः समुत्सार्य सूकर्यो नीयन्ते वहुमानम् ॥२

लघुचणकं विस्फोटध्वनिना विध्वंसयते भ्राष्ट्रम्
विक्रीणीते कनकलुब्धकस्स्वयं राष्ट्रपो राष्ट्रम्
तिष्ठति देवालय उपेक्षितः सम्पूज्यते श्मसानम् ॥३

पिपीलकाः पृष्ठैर्वहन्ति गिरितुल्यं दुर्वहभारम्
मृल्लोष्टाघातो निपातयति दृढदुर्गप्राकारम्
कारवेल्ललतिकाऽवलम्वते कटुपिचुमन्दवितानम् ॥४

वधिराः सावधानमनसा शृण्वन्ति चित्रपटगीतम्
पश्यन्त्यन्धा गृध्द्रदृष्टयः प्रकृतिवैभवं स्फीतम्
उष्ट्राणां परिणये गर्दभा गायन्त्युत्सवगानम् ॥५

पूज्यन्तेऽत्राऽपूज्यास्सततं पूज्यास्तिरस्क्रियन्ते
दुष्टाः पुरस्क्रियन्तेऽविरतं निर्दोषा दण्ड्यन्ते
नारायणमुच्चार्याऽरोहत्यजामिलोऽपि विमानम् ॥६

साम्प्रतिके भारते हन्त किं किं न सम्भवति चित्रम्
अमरनाथयात्रिणो म्रियन्ते हा कियदिदं विचित्रम्

किन्तेऽधुना जगत्यवशेक्ष्यति प्रमथाधिप! प्रमाणम् ।
कीदृशमिदं विधानं शम्भो! कीदृशमिदं विधानम् ॥७



# भुवमागता भागीरथी

परया भगीरथचर्यया भुवमागता भागीरथी ॥

विधिना कमण्डलुमोचिता सलिलैः खनीलिमहारिणी
चन्दिरविभाजलवर्षिणी भुवमागता भागीरथी ॥१

धावन्महीपरथाऽनुगा पतनोद्भवद्धम्भारवा
ननु गृष्टिरिव ममतामयी भुवमागता भागीरथी ॥२

हिमहार-पारद-पाण्डुरा कर्पूरनदकल्लोलिनी
वापीव सितशरदुत्पला भुवमागता भागीरथी ॥३

दयितेन नभसा प्रेषिता वीच्यक्षरैर्दयिताम्प्रति
ननु पत्रिकेव रतिम्भरा भुवमागता भागीरथी ॥४

आकाशनायकमूर्धजे शतलक्षकोटितरङ्गकैः
दधतीव कङ्कतिकासुखं भुवमागता भागीरथी ॥५

पशुपतिकपर्दगुहागृहे चिक्रीडिषुः कूकूरुतम्[1]
गौरीकुटिलनयनेक्षिता भुवमागता भागीरथी ॥६

तापत्रितयसंघट्टने दिव्यौषधिप्रतियातना
सकृदीक्षणेन विमुक्तिदा भुवमागता भागीरथी ॥७

उच्चैः क्वचिन्नीचैः क्वचित्क्वचिदन्तरा तिर्यक्क्वचित्
भुजगीव शान्तमधोमुखी भुवमागता भागीरथी ॥८

अभिराजजीवनमरुवणं नन्दनवनं ननु कुर्वती
प्रत्यक्षवत्सलदेवता भुवमागता भागीरथी ॥९

---

१. लुकाछिपीति भाषायाम् ।

# कविता

वन्दनायै समुद्गता कविता
नन्दनायै समुद्गता कविता ॥१

शोकमोहाऽवमान - कारासु
सान्त्वनायै समुद्गता कविता ॥२

नग्नतानां हि राक्षसीवाचाम्
छादनायै समुद्गता कविता ॥३

कण्ठहालाहलार्ऽचिषां शम्भोः
ह्लादनायै समुद्गता कविता ॥४

सिद्धसिन्धोः प्रसर्पतां वाराम्
शृङ्खलायै समुद्गता कविता ॥५

स्वर्गलभ्यां सुधां निपाययितुम्
पारणायै समुद्गता कविता ॥६

गीतमाधुर्यलुब्धरङ्कूणाम्
बन्धनायै समुद्गता कविता ॥७

प्रोषितानां व्यथार्तवृत्तीनाम्
व्यञ्जनायै समुद्गता कविता ॥८

राघवार्तिश्रवस्फुटद्दृषदाम्
शंसनायै समुद्गता कविता ॥९

हृद्यराधामुकुन्दलीलानाम्
दर्शनायै समुद्गता कविता ॥१०

मर्त्यलोकस्य जाड्यभावानाम्
वारणायै समुद्गता कविता ॥११



# प्राणवल्ली यतो नाऽग्निना सेचिता

सौम्यवानीरवृत्तिः क्वचिद् वर्तिता
आयसी रुक्षता क्वापि नित्यं धृता ॥१

दानदण्डोपजापा यदा निष्फलाः
शर्करामाधुरी वाचि तत्राऽर्पिता ॥२

सौहृदं सौहृदेनैव सम्भावितम्
वञ्चना वञ्चनाभिस्समाराधिता ॥३

नाऽब्जपत्राभमासीज्जले जीवनम्
बन्धुभार्याऽवसक्तिर्न निर्भर्त्सिता ॥४

येन मार्गेण याता यथा पूर्वजाः
सैव पाटी मयाऽप्यात्मतुष्ट्यै धृता ॥५

नैकवारं कृतं दोषसंशोधनम्
क्षारकूपाम्बुभिर्नो तृषा तर्पिता ॥६

नैव चामीकराणां वहिर्लेपनैः
मृत्तिकाऽभ्यन्तरी स्वर्णराशीकृता ॥७

लक्ष्यमासीन्न देवप्रतिष्ठा यतो
मानवीयैव शंसा ततोऽन्वर्थिता ॥८

शक्यमासीन्न यत्कर्तुमात्मोद्यमैः
तत्कृते वाङ्मयीसृष्टिराकल्पिता ॥९

चिन्त्यमद्याऽभिराजस्य नो किञ्चन
प्राणवल्ली यतो नाऽग्निना सेचिता ॥१०

●

# जलदागमयामिनी

मेघान्तरितो जातश्चन्द्रमा
भीषयते जलदागमयामिनी ।
सम्प्रत्यपि परदेशे वल्लभो
भवने सीदति बाला भामिनी ॥१

उत्तिष्ठिति धावति च पलायते
हरिरिव संक्रीडति धाराधरः ।
परिरम्भे बद्धा वृषभानुजा
तनुते सौभाग्यं सौदामिनी ॥२

प्रथमरमणभीतां सहचारिणी-
मनुनेतुं यतते पारावतः ।
प्रसादयति कलविङ्कः चुङ्कृतै-
र्वर्षामदमत्ताऽ प्यभिसारिणी ॥३

खद्योता वल्गन्ते सत्वरम्
अमृतसिद्धियोगस्तेषामयम् ।
अरुणाभां गोपवधूटीपङ्क्तिं
हारीकुरुते वसुधा कामिनी ॥४

तूष्णीमुपयातः किल कोकिलो
मौनं तस्थौ श्रान्तश्चातकः ।
अभिनन्द्यन्ते सम्प्रति दर्दुरा
वाणी येषां टिप्टिप्कारिणी ॥५

यक्षिणी विरहिणी संस्मृतिपथं
समायाति केषां न घनागमे ।
प्रोषितस्य कस्य नो प्रतीयते
स्वप्रियैव धनपतिपुरवासिनी ॥६

•

# रहस्यं साधु जानेऽहम्

कदाचित्सौधशृङ्गस्थोऽपि काको नैति तार्क्ष्यत्वम्
न दोषो मृष्यते यत्नैः रहस्यं साधु जानेऽहम् ॥१

समुत्थेयं कुतो वात्या किमर्थं किङ्कृतेयं वा
गृहेऽग्निः केन सन्दीप्तः किमर्थञ्चेति जानेऽहम् ॥२

विधानं चाटुभिर्भुङ्क्ते वली स्तम्बेरमः कस्मात्
धुनीते वा कथं श्वा पुच्छमित्यपि साधु जानेऽहम् ॥३

क्वचिद् रामः क्वचिद् रोटी क्वचित्सर्वोदयाऽऽकाङ्क्षा
अभिप्रायन्नु युष्मद्भाषणानां भूरि जानेऽहम् ॥४

भृशं निर्भर्त्सितः कर्णिकपदैरपि, राजनीतौ त्वम्
यथा काष्ठाधिरुढस्तत् प्रतिष्ठामर्म जानेऽहम् ॥५

हृदिस्थं कालकूटं यन्निगूह्योद्गिरसि पीयूषम्
प्रयतसे छलयितुं युक्त्याऽभिराजं तच्च जानेऽहम् ॥६

क्वचिद्रक्तः क्वचित्पीतः क्वचिद्वा कर्बुरः कृष्णः
कथं कृकलासतामेषि व्रतन्ते तात! जानेऽहम् ॥७

जितं त्वयका जगत्सर्वं यया कलया महामायिन्
रहस्यं कृष्णवस्त्राणां त्वदीयं हन्त जानेऽहम् ॥८

घनैरस्मादृशां कण्ठाः पिकानां स्तम्भिता नूनम्
ध्वनन्ते शवरवाचामवसरोऽयं साधु जानेऽहम् ॥९



# कोऽपि नो शृणोति वाचिकम्

ऊर्ध्ववाहुको विरौम्यहं, कोऽपि नो शृणोति वाचिकम्
भाविसाध्वसाद् विरौम्यहं, कोऽपि नो शृणोति वाचिकम् ॥१

जीर्णकाष्ठभङ्गुरा तरी नाविकोऽपि मद्यघूर्णितः
वल्गते प्रभञ्जनोऽम्वरे सूचयन्नकाण्डताण्डवम् ॥२

ज्वालितस्समर्चनागृहे यस्त्वया शिखावलस्सखे
क्षीयते नु तस्य वर्तिका स्नेहसंकटे क्व जीवितम् ॥३

योऽयमश्रुसागरेऽखिलं रङ्गमेव मज्जयत्यहो
कोऽत्र विस्मयो यतो न्विदं प्राग्दशाऽभिनीतिपाटवम् ॥४

पुष्पिते फलान्विते तरौ शुष्यति क्व मूलमूर्जितम्
घोषयन्ति तत्कथं खला भारतेऽद्य संस्कृतं मृतम् ॥५

लोक एव तन्त्र्यते दृढं, हन्त शासका न लम्पटाः
उज्ज्वलं कुतोऽस्तु भारते शासनं नु लोकतान्त्रिकम् ॥६

अग्निना सहाऽप्यहं सुखी, वारिणा सहाऽप्यहं सुखी
एतदेव मेऽस्ति पौरुषं दुर्लभं यशोऽभिचारजम् ॥७

कीदृशो दशाविपर्ययो यन्निरक्षरा विपश्चितः
काव्यकृत् कुविन्दकव्रजो मोदतेऽधिभोजवाटिकम् ॥८

दुर्मदेन हस्तिना हतो यत्पिपीलको मरुस्थले
तद् विलोक्य सैन्धवं जलं द्राग्वभूव हन्त तैलकम् ॥९

वल्लभे सनातने रथे ज्ञानपुष्पकान्तभास्करे
सादराः पिवन्तु सार्जवं वल्गुभावमाभिराजिकम् ॥१०

●

# क्व नु भवितासि दृशोर्मे

नीलवलाहक - वारिततरुणतरणि - तरुणातपभारम्
यद्यपि सकलविभवधनधनिकं बालीद्वीपमुदारम् ।
मल्लीमधुलम्पटमधुकर इव तदपि मनो मम दीनम्
वल्ल्यन्तरमादकमधुविमुखं स्मरति सुखं प्राचीनम् ।
अयि मम भारतभूमे ।
क्व नु भवितासि दृशोर्मे ॥१

कीचकगुल्म - निलीनविहगकुल - कलरवशंसितगात्रम्
संस्मरामि नवनीवृति-नीवृति मङ्गलललितविभातम् ।
ननु गन्धर्वनगरमिव निखिलं जातं हन्त कुतो मे
क्व नु भवितासि दृशोर्मे ॥२

चटुलविहङ्गसमुत्सारणपटु कृषकडिम्भनिकुरम्बम्
परिणतशस्यमवति मञ्चोपरि मुखवाद्यं प्रतिसन्ध्यम् ।
स्मृतिमवतरति शैशवं चरितं तत्खलु चिन्तयतो मे
क्व नु भवितासि दृशोर्मे ॥३

स्तोकसलिल - कृतकर्दमविलुठित - नग्नार्भकसमुदायः
द्वारि-द्वारि विलुठ्य याचते जलदजलं श्रितमायः ।
प्राक्तनमपि तद् भाति नवीनं चित्रं प्रगुणयतो मे
क्व नु भवितासि दृशोर्मे ॥४

ग्रामटिका - वहिरुपवन - विलसितधान्यसमृद्धिनिधानम्
स्वजनसदसि निशि वृद्धपितामहलोककथामृतपानम् ।
क्व नु भुवि सा सहजामृततटिनी याऽञ्चति राष्ट्ररजो मे
क्व नु भवितासि दृशोर्मे ॥५

निपुणकलाधर - कलाकदम्बकमहिता रजनिरुदारा
गलितमधूकसुमासव - लोलपुलिन्दवधू - धृतिसारा ।
तदधिनिशीथं चातकरटितं स्मृतमर्दयति मनो मे
क्व नु भवितासि दृशोर्मे ॥६

प्रथमघनागम - सिक्तधराञ्चल - समुदितगन्धवितानम्
पल्वलगर्त - मकररथ्याश्रित - भेकविटस्मरगानम् ।
दूर्वातल्पग - गोपवधूनिवहोऽभूद् दृष्टिहरो मे
क्व नु भवितासि दृशोर्मे ॥७

आदिवसं व्यापृतिचयविकलं कायगतं परतन्त्रम्
स्खलितखलीन-वुसालयसंस्तुतहय इव हृदयमतन्त्रम् ।
स्वप्नविधावनुसरति निकामं त्वामपि जननि! रहो मे
क्व नु भवितासि दृशोर्मे ॥८

तीर्थस्थलनगनगरनिम्नगा - ग्रामारण्य - शरीरा
त्वमसि धरा विबुधादृतकाम्या ऋतहृदयाऽमृतनीरा ।
नोऽद्धा भुवि दृश्यतेऽन्यदेशो रुचिरो भवत्समो मे
क्व नु भवितासि दृशोर्मे ॥९

रुचिरसुवर्णरचितपञ्जरगृह- वारितमुक्तविहारः
ताम्यतिजननि! सुहृज्जनविरहितशुकशिशुकोऽयमुदारः ।
आत्मजमानय सविधे भारति! कुरु भव्यं नमतो मे[1]
क्व नु भवितासि दृशोर्मे ॥१०

●

---

१. वालीप्रवासावधौ (१९८७-८९) प्रणीतेयं गीतिः ।

# भवेदिह मर्त्यलोके जन्म

भवेदिह मर्त्यलोके जन्म मम भूयोऽपि शतवारम्
परं स्याद् भारते ॥

विराजन्तामनन्ताः शालयो नतमञ्जरीपुञ्जाः
सुशोभन्तां वनान्ता दुष्प्रवेशलसन्निचुलकुञ्जाः
भवेदिह मृत्तिकायां विलुठनं भूयोऽपि शतवारम्
परं स्याद् भारते ॥१

वहेन्मम जनपदे गङ्गा तरणिजा किञ्च कावेरी
शतद्रुर्नर्मदा भद्राऽथवा संस्पृष्टशृङ्गेरी
भवेदिह निम्नगायां गाहनं भूयोऽपि शतवारम्
परं स्याद् भारते ॥२

लिहन्त्वाकाशचरणं पर्वतानां तुङ्गशिखराग्राः
इतस्तत एव ढौकन्तां वलाहकपोतका व्यग्राः
भवेदिह देवदारुवनेऽटनं भूयोऽपि शतवारम्
परं स्याद् भारते ॥३

कलिङ्गो मेऽस्तु वङ्गाङ्गोऽथवाऽऽन्ध्रः केरलो वाऽपि
मरुर्वा गुर्जरो वा कोसलो ननु मेकलश्चापि
भवेदिह नीवृति क्वाप्यन्वितिर्भूयोऽपि शतवारम्
परं स्याद् भारते ॥४

प्रकामं श्रवणरन्ध्रं पूरयेदिह मारुताऽऽनीतम्
चटकपिककेकिचातकतित्तिराणां मधुमदिरगीतम्
भवेदिह रञ्जनं मनसो धियो भूयोऽपि शतवारम्
परं स्याद् भारते ॥५

क्वचिद् वर्षातमिस्रायां तमः कृच्छ्रेण भिन्दन्ती
चरन्ती ज्योतिरिङ्गणसंहतिर्लक्ष्येत नन्दन्ती
भवेदिह नयनसेचनकं विभो! भूयोऽपि शतवारम्
परं स्याद् भारते ॥६

सजलजलधरतनौ क्वचिदैन्द्रचापो निर्भरं तनुताम्
क्वचिच्चैत्रक्षपा मल्लीकुसुमसौरभसुखं लभताम्
भवेदिह सहचरी प्रकृतिप्रिया भूयोऽपि शतवारम्
परं स्याद् भारते ॥७

●

# भारतीयोऽहम्

विश्वकल्याणे मतिः
विश्वनिर्माणे रतिः
भारतीयो भारतीयो भारतीयोऽहम् ।
भारतीयो भारतीयो भारतीयस्त्वम् ॥१

उत्तरस्यां हिमगिरिः प्रहरीव भूवन्धुः
दक्षिणस्यां क्षालयत्यङ्घ्रि महासिन्धुः

मृत्युमुक्ता अपि सुराः
कीर्तिगायनतत्पराः
भारतीयो भारतीयो भारतीयोऽहम् ।
भारतीयो भारतीयो भारतीयस्त्वम् ॥२

कर्म कुर्वन्नेव याचेऽहं शतायुष्यम्
सूनृतां वाचं दधे काङ्क्षे न पारुष्यम्

श्रेयसां मार्गं वृणे
श्रद्दधे च तृणे-तृणे
भारतीयो भारतीयो भारतीयो ऽहम् ।
भारतीयो भारतीयो भारतीयस्त्वम् ॥३

सौहृदे कुसुमादपि प्रचुरं मृदुत्वं मे
शात्रवे व्रजादपि प्रचुरं दृढत्वं मे

कोमलो मलयानिलः
दारुणो झञ्झानिलः
भारतीयो भारतीयो भारतीयोऽहम् ।
भारतीयो भारतीयो भारतीयस्त्वम् ॥४

वालुकातस्तैलमुद्धर्तुं न किं जाने !
क्रुद्धसिंहीमप्यहं दोग्धुं न किं जाने !

नन्वमृतपुत्रोऽस्म्यहम्
मृत्युभयमुक्तोऽस्म्यहम्
भारतीयो भारतीयो भारतीयोऽहम् ।
भारतीयो भारतीयो भारतीयस्त्वम् ॥५

अङ्गवङ्गकलिङ्गकेरलगुर्जरान्ध्रवृतः
विन्ध्यमरुभूपञ्चनदकश्मीरजम्बुधृतः

गङ्गयाऽप्यभिषेचितः
भूतले चिरवन्दितः
भारतीयो भारतीयो भारतीयोऽहम् ।
भारतीयो भारतीयो भारतीयस्त्वम् ॥६

देववाणी संस्कृता मे पावनी भाषा
विश्वभाषाऽम्वा समृद्धौ न्यक्कृताऽऽकाशा

स्वादु यत्काव्यामृतम्
नाकिनामपि सम्मतम्
भारतीयो भारतीयो भारतीयोऽहम् ।
भारतीयो भारतीयो भारतीयस्त्वम् ॥७

लोकतन्त्रस्थापने सर्वोदये नित्यम्
विश्ववशान्तौ विश्ववन्धुत्वे च यत्सत्यम्

देश एषोऽग्रेसरः
विश्वमङ्गलशेखरः
भारतीयो भारतीयो भारतीयोऽहम् ।
भारतीयो भारतीयो भारतीयस्त्वम् ॥८

●

# रक्ष रक्ष भारतम्

विश्वसंस्कृतेर्विधायकं विश्वबन्धुतासमर्थकम्
अद्य सीदति स्वके गृहे देववन्दितं नु भारतम् ॥१

प्रान्तभूमयो न रक्षिता: कम्पतेऽचलो हिमालय:
आह्वयत्यलं स्वपुत्रकान् रक्ष रक्ष रक्ष भारतम् ॥२

रामकृष्णयोरियं धरा न्यायधर्मसत्यरक्षिणी
जैनवौद्धशासने रतं धुर्यतामवाप भारतम् ॥३

क्वाद्य तद् व्यतीतगौरवं क्वाद्य तच्चरित्रवैभवम्
गम्यतेऽद्य केन वर्त्मना येन नाशमेति भारतम् ॥४

सिन्धुरन्धतामुपैत्यहो पाशयन्त्रिता विपाशिका
त्रासशङ्किता वितस्तिका क्रन्दति व्यथार्तभारतम् ॥५

मालिका विशीर्यते कथं, भिन्नता कथं सुमे-सुमे
अर्चनां करोतु तत्कथं मन्दिरे विषण्णभारतम् ॥६

कम्पते चिनारकाननं केसरो हुताशनायते
ध्वस्तकाशमीर'मङ्गलं दीनतामुपैति भारतम् ॥७

यत्कृते सहस्रसंख्यका राष्ट्रभक्तिभावनाभृता:
मृत्युदण्डमाप्नुवन्मुदा क्वाद्य तन्महार्घभारतम् ॥८

भक्तसिंहचन्द्रशेखरौ सैन्यनायकस्सुभाषक:
यत्कृते जहु: स्वजीवनं क्वाद्य तद्विशालभारतम् ॥९

हिन्दुमुस्लिमैकताकृते यत्र हा महात्मगान्धिनाम्
प्राणसूत्रमेव खण्डितं क्वाद्य तद्विकीर्णभारतम् ॥१०

इन्दिरा हता मनस्विनी राजिवश्च[2] भारतोदयः
नो तथापि शान्तिमश्नुते दुर्दशाभिशप्तभारतम् ॥११

हूणशक्कुषाणवर्वरान् क्षेमयोगखण्डने रतान्
यद् ववन्ध वन्धुतागुणैः क्षीयते तदद्य भारतम् ॥१२

भिन्नसम्प्रदायवादिनो भिन्नजीवनस्वदृष्टयः
मित्रवत्सदोदयं दधुः खिद्यते तदद्य भारतम् ॥१३

सिक्खहिन्दुभेदभावना हिन्दुमुस्लिमप्रवञ्चना
अद्य किन्निमित्तमुत्थिता खण्ड्यते तयैव भारतम् ॥१४

भारतीसुता वयं न किं पालिता गृहाङ्गणे समम्
गर्विताास्त्रिवर्णकध्वजैस्तत्कथं विपन्नभारतम् ॥१५

भारताय जीवनं दधे भारताय मृत्युमपि वृणे
यावदन्तिमक्षणं मुखे नेत्रयोश्च भातु भारतम् ॥१६

●

१. काशमीर काश्मीरराज्यमिति। छन्दोऽनुरोधेन वर्णभक्तिः।
२. राजीव इति। छन्दोऽनुरोधात् ह्रस्वता।

# इन्दिरे ! त्वदीयभारतम्

आत्मदुष्कृतैः कलङ्कितं द्वेषदैन्यतापधर्षितम्
त्वां विना विपन्नतामितम् इन्दिरे! त्वदीयभारतम् ॥१

राजते प्रतिद्रुमं वने साम्प्रतम् उलूकमण्डलम्
काननं वभूव निष्पिकम् इन्दिरे! त्वदीयभारतम् ॥२

मन्दिरं यथा शिखां विना, चन्द्रिकां विना यथाऽम्वरम्
त्वां विना तथैव निष्प्रभम् इन्दिरे! त्वदीयभारतम् ॥३

पन्नगा लसन्ति चन्दने, वायसाः सुवर्णपञ्जरे
दृष्टिहीनदर्पणोपमम् इन्दिरे! त्वदीयभारतम् ॥४

सेवते प्रभाकरस्तमो, ज्योतिरिङ्गणैरुपद्रुतः
मन्दुरायितं प्रतीयते इन्दिरे! त्वदीयभारतम् ॥५

लक्ष्यते व्यतीतवक्षसि त्वत्पदाङ्कितं विशेषकम्
किन्तु साम्प्रतं विमूर्च्छितम् इन्दिरे! त्वदीयभारतम् ॥६

प्राप यत्त्वयाऽऽत्मगौरवं भूरिवैभवं महीतले
क्रन्दन्ति त्वया विनाऽऽहतम् इन्दिरे! त्वदीयभारतम् ॥७

कुञ्चितां विलोक्य ते भ्रुवं शत्रवोऽपि यद्भयं गताः
तेन गर्वितं पुरा चिरम् इन्दिरे! त्वदीयभारतम् ॥८

क्रीडयैव निर्मितं त्वया वाँगलाख्यराष्ट्रमद्भुतम्
तेन वर्धितं पुरा चिरम् इन्दिरे! त्वदीयभारतम् ॥९

यत्कृते त्वदीयजीवनं यत्कृते च तत्समर्पणम्
रक्तगङ्गयाऽपि पावितं निर्मलं न भाति भारतम् ॥१०

योऽपि याति संसदालयं हन्त सः स्वजातिमीक्षते
पर्वतायतं तिलीकृतं दैन्यमेति किन्न भारतम् ॥११

जातिधर्मसम्प्रदायतो वन्धुता न विक्रियां भजेत्
यत्त्वया नु चिन्तितं सदा तेन हीयतेऽद्य भारतम् ॥१२

यावदस्ति सौरभं सुमे व्योम्नि यावदिन्दुभास्करौ
त्वां न विस्मरिष्यति ध्रुवम् इन्दिरे! त्वदीयभारतम् ॥१३

मञ्जुले कलिन्दजातटे शक्तिसंस्थलं विराजते
त्वत्समर्चनं करिष्यति त्वत्समर्चितन्नु भारतम् ॥१४

# सञ्जातं निखिलं पर्याकुलम्

पश्य, पिपीलिका पर्वतायते, सञ्जातं निखिलं पर्याकुलम्
राष्ट्रमिदं हन्त! मन्दुरायते, सञ्जातं निखिलं पर्याकुलम् ॥१

नारम्भे नान्दी, नाऽन्तेऽपि भरतवाक्यम्
चरिते न च कथानायकानामौदात्त्यम्

राजनयो लटकमेलकायते, सञ्जातं निखिलं पर्याकुलम् ॥२

खद्योतैः सम्भुक्ता गर्भवती रजनी
विभावसुं सूते प्रतिभाति देवजननी

वर्षवरो विक्रमिणं त्रायते, सञ्जातं निखिलं पर्याकुलम् !!३

संस्मृतिपथमुपयाता कविकुलगुरुवाणी
प्रतिकण्ठं श्रूयतेऽद्य 'हाय राजा जानी'

संस्कृतिमृगकुलं श्वापदायते, सञ्जातं निखिलं पर्याकुलम् ॥४

भ्रष्टो विद्रवति गजः कुक्कुररवभीतः
हन्यते शुनश्शेपः पुत्रार्थं क्रीतः

कोऽपि नैव विश्वामित्रायते, सञ्जातं निखिलं पर्याकुलम् ॥५

गृहवन्तो व्यथिता दुर्वहकरभरभुग्नाः
लीलासंन्यस्ता वैभवसिन्धौ मग्नाः

जर्जरकन्थाऽपि क्षौमायते, सञ्जातं निखिलं पर्याकुलम् ॥६

वण्ड-भण्ड-मूढधियां कृते सिद्धिसारम्
अपावृतं जनतन्त्रे मुक्तिमयं द्वारम्

मन्त्रिपदं कल्पपादपायते, सञ्जातं निखिलं पर्याकुलम् ॥७

गृहे-गृहे क्रन्दनमथ दृशि-दृशि जलधारा
राज्यं विदहन्ति पञ्चनदमप्यङ्गाराः

आतङ्कस्तत्र रावणायते, सञ्जातं निखिलं पर्याकुलम् ॥८

समाजाद्वरं नूनं समजोऽप्रतिगामी
क्रोधमोहकामादिषु परं स्वाभिमानी

मनुजो निस्सारश्चञ्चायते, सञ्जातं निखिलं पर्याकुलम् ॥९

क्वचिद्विनशने शुष्का सरस्वती-धारा
रसध्वनिवचोभङ्गी - जनितचमत्कारा

कविता मातङ्गकन्यकायते सञ्जातं निखिलं पर्याकुलम् ॥१०

असंस्कृतो योऽसौ सुरवाणीप्रतिपक्षः
क्लीवो ननु यथा कोऽपि परिणयनेऽध्यक्षः

अभिराजो हतप्रभो जायते, सञ्जातं निखिलं पर्याकुलम्
राष्ट्रमिदं हन्त मन्दुरायते, सञ्जातं निखिलं पर्याकुलम् ॥११



# कस्मै खलु हविषा विधेम

मन्दिराणि दनुजा अध्यासते
कस्मै खलु हविषा विधेम?

नदी श्यानपुलिना तन्वङ्गी सञ्जाता
जानुदघ्नसलिला सिकताचयसंघाता

उपेक्षिता नौर्न जलं गाहते
कस्मै खलु हविषा विधेम? १

मानवता जातिधर्मजनपदैर्विभक्ता
विभववारुणीपानैर्लक्ष्यते प्रमत्ता

शक्तिरेव नीतिं परिभाषते
कस्मै खलु हविषा विधेम? २

वाटीमादौ भनक्ति ननु झञ्झावातः
पश्चात्सान्त्वयति चिरं मृदुशीतलगात्रः

पद्धतिर्नवा केयं जायते
कस्मै खलु हविषा विधेम? ३

मृता सौम्यगुणचर्चाऽध्यवसायोऽपार्थः
अर्थ एव सञ्जातश्चरमः पुरुषार्थः

भिक्षुरेव सम्प्रति धनदायते
कस्मै खलु हविषा विधेम? ४

विश्वबन्धुतोद्घोषो मध्येसमवायम्
साक्षात्कारेषु पुनः परिजनसमुदायम्

धृतराष्ट्रीभूय बुधस्त्रायते
कस्मै खलु हविषा विधेम?५

चक्रव्यूहेषु हन्त गुरवस्संलग्नाः
दुर्योधनवलिपुष्टा वैभवरसमग्नाः

धीर्न कस्य पतने मलिनायते
कस्मै खलु हविषा विधेम?६

मेने यं भास्वरमणिरत्नम् अभिराजः
परीक्षणे जाते सञ्जातोऽसौ काचः

विकलाङ्गी श्रद्धा श्राद्धायते
कस्मै खलु हविषा विधेम?७

●

# नमो नमः

कलिकाल महात्मन् नमोनमः
आश्चर्यशतात्मन् नमोनमः ।
हे संस्कृतिपुष्करणीध्वंसक
मद-मेदुर-वारण ! नमोनमः ॥१

त्वं रविश्शशी मङ्गलो बुध-
स्त्वं गुरुरुशनास्त्वं शनैश्चरः ।
त्वं राहुः केतुर्वसुन्धरा
त्वं ब्रह्मा विष्णुर्महेश्वरः ॥

निखिलं ब्रह्माण्डं निजकुक्षौ
संस्थाप्य विलुण्ठन्नमो नमः ॥२

सत्यं समतीतं कृते युगे
क्षीणं त्रेतायां तपोधनम् ।
यज्ञोऽपि गतो द्वापरे युगे
त्वय्यवशिष्टं ननु दानधनम् ॥

अवसीदत्येकपदो वृषभो
धर्मो गतिहीनो नमो नमः ॥३

मनुजेषु महार्घो जननेता
चलचित्रनायिका तिलोत्तमा ।
सम्प्रति कुक्कुरः पशुश्रेष्ठः
परिचरति यमुत्सङ्गे ललना ॥

रासभाः स्वदन्ते त्वत्कृपया
द्राक्षां महितात्मन् नमोनमः ॥४

अन्धा नेतारो दृष्टिवतां
मूर्खाश्च नियन्तारो विदुषाम् ।
त्वत्प्रवर्तिते जनतन्त्रेऽस्मिन्
क्लीवास्त्रातारो महौजसाम् ॥

तारयसि स्थलेऽपि यन्नौकां
तुभ्यं चित्रात्मन् नमोनमः ॥५

महिलामुक्त्यान्दोलनैस्त्वया
गृहबद्धा नार्यो विमोचिताः ।
पतयः पचन्ति किल महानसे
पत्न्यश्च समाजोद्धाररताः ॥

धात्री पालयति शिशुं भवने
पितृपरिचयरहितं नमोनमः ॥६

त्वत्कृपयाऽसावस्वेडकरो
नवबोधिसत्त्वपदसमर्चितः ।
मर्यादापुरुषोत्तमरामः
स्वगृहेऽपि न तिष्ठति कदर्थितः ॥

मन्दिरं मस्जिदं नास्त्युभयं
तत्कृते, कृतात्मन् नमोनमः ॥७

निर्वाप्य चतुर्वर्णाग्निकणं
जातेर्दावाग्निस्त्वयेरितः ॥
प्रज्वलति राष्ट्रसामञ्जस्यं
कीदृशश्चमत्कारो विहितः ॥

कृण्वतां विश्वमार्यं क्वाऽस्ते
स्वप्नः परमात्मन् नमोनमः ॥८

सीमिता वयं भौतिकोन्नता-
वध्यात्मदृष्टिरधुना शीर्णा ।
प्राप्तोऽप्राप्तो वाऽनर्थमेव
जनयत्यर्थो, न रतिर्जीर्णा ॥

क्व नु याति भारती-परम्परा
चिन्तय मुदितात्मन् नमोनमः ॥९

गुरुसाहिब - गॉड - खुदासंज्ञा
रामश्च तुरीयः प्रभुस्सताम् ।
चत्वार ईश्वराः पृथक्-पृथक्
राष्ट्रे यस्मिन्नु विराजन्ताम् ॥

कतमस्तेषां प्रार्थ्येत हन्त
राष्ट्रोद्धारार्थं नमोनमः ॥१०

क्वासते सिन्धुसभ्यताऽञ्चिताः
शाकलशालातुरतक्षशिलाः ।
मूलस्थानं क्व नु पुरुषपुरं
प्राक्तनपाञ्चालश्रियो ऽखिलाः ॥

त्वयि समुज्जृम्भिते राष्ट्रधरा
खण्डिता शुभात्मन् नमोनमः ॥११

सागरोत्काललहरीनिचयै-
स्सह खेलन्तो मृत्युक्रीडाम् !
चम्पाकटाहकम्बुजदेशान्
ये गताः प्राप्य संस्कृतिवीणाम् !!

तेऽप्यद्यातीतकथा - विषया
विहिता भव्यात्मंन् नमोनमः ॥१२

मारितः कोऽपि पशुमारमहो
राष्ट्राद् बहिष्कृतः कोऽप्यपरः ।
शूलेऽवलम्बितः कोऽपि हन्त
दासतामुक्तिसमर - प्रवरः ॥

ऐतिह्यं तेषां स्मरति कोऽद्य
सौवर्णमृगात्मन् नमोनमः ॥१३

लोकोऽद्य कृतघ्नस्त्वत्कृपया
त्वत्कृपया जातश्शठोऽधमः ।
पूजास्थानं न गुणा अधुना
ज्योतिषां गृहे वल्गते तमः ॥

सत्यं जयते न क्वचिद्धन्त
सकृदप्यनृतात्मन् नमोनमः ॥१४

अथवा विलपिष्यत्यभिराजो
विवशस्त्वत्पुरतः कियच्चिरम् ।
सर्वतो विपर्यस्तं दृष्ट्वा
भारतराष्ट्रं मूकं बधिरम् ॥

धृतराष्ट्रोऽसि प्रचितः पुत्रै-
र्निर्मितदुश्शासन नमोनमः ॥१५

●

# कैरविणी सन्ध्या

अतरुणतरणिपतनभयविधुरा कैरविणी सन्ध्या
तरलतारका चन्दिरवदना भाति कथं वन्ध्या ॥१

कथं मानसादपक्षीयते शनकैरुल्लासः
सच्छिद्रात्कलशाद्धि जायते यथा सलिलनाशः ॥२

कस्या इयं स्मृतिर्हृदये मे प्रभवति मदलेखा
निकषोपलपृष्ठे यथाऽङ्किता शातकुम्भ-रेखा ॥३

वाततरङ्गितवापीजलमिव कथम्मनोऽशान्तम्
हृदि गूढा मे व्यथा पुराणी कथं याति नान्तम् ॥४

ज्ञातम्मया रहस्यमिदानीं निहृता संशीतिः
प्रभवति जीवनसहचरि ! सम्प्रति तव सान्द्रा प्रीतिः ॥५

अयि राजेशकुमारि ! तरङ्गिणि ! कुसुमराशिमसृणे
तव विरहे ताम्यति तव कान्तो नामाहृततगणे ॥६

त्वमसि मदम्बरमणिपुनरुदये पुनर्नवा प्राची
अनवद्याङ्गि ! ललितवचनावलि ! तव चाऽहं याची ॥७

आकाङ्क्षा शतमुखी प्रशान्ता त्वामवाप्य बन्धुम्
स्थिरतामेति यथा तटिनी समवाप्य महासिन्धुम् ॥८

त्वय्यहमस्मि विलीनो मय्यपि शुभे ! त्वमसि लीना
सप्तस्वरा यथा वीणायां तेषु यथा वीणा ॥९

नयमार्गं मां गमय विनयवति ! नितरामभिराजम्
प्रीतिकरं सहचरणमावयोः प्राण्यान्नु समाजम् ॥१०



# यदारभ्य सौम्ये !

प्रतिष्ठापिता त्वं यदारभ्य सौम्ये
अभून्मन्दिरं वन्धुरं जीवनम्मे ॥

निशा तामसी लुप्तमार्गाऽप्रयाताऽ
प्यकस्माद्वभौ कोटिचन्द्रावदाता ।
विकासं ययौ मुद्रितं कैरवम्मे
अभून्मन्दिरं वन्धुरं जीवनम्मे ॥१

पदैर्मन्थरैस्त्वं मुदाऽग्रेसरन्ती
प्लवन्ती विलोलं सकामेव हंसी ।
उपेताऽसि पूर्णं मनोऽब्धेस्तटम्मे
अभून्मन्दिरं वन्धुरं जीवनम्मे ॥२

वृहत्कल्मषं ध्वंसितुं मेऽन्नपूर्णा
नभोमण्डलात्स्वर्धुनीवावतीर्णा ।
त्वया पावितं कल्पितं शापितम्मे
अभून्मन्दिरं वन्धुरं जीवनम्मे ॥३

लिपिर्वैधसी निष्ठुरा हन्त वन्ध्या
त्वया सङ्गताऽभूदनङ्गैकसन्ध्या ।
क्षणेनैव सिद्धं समग्रेहितम्मे
अभून्मन्दिरं वन्धुरं जीवनम्मे ॥४

चितिस्साम्प्रतं विस्तृतव्योमरम्या
मनीषाऽपि मे नूतनोन्मेषधन्या ।
कवित्वं त्वया देवि ! सत्यापितम्मे
अभून्मन्दिरं वन्धुरं जीवनम्मे ॥५

●

## त्वमागता तथा

ममाऽभिशप्तजीवने त्वमागता तथा
भगीरथाऽनुयाचिता सुरापगा यथा ॥

अवाप तीर्थतामहो स्वयं तटं तटम्
पराङ्मुखीकृताऽपराधसञ्चरद्भटम् ॥

विलीयतेस्म दारुणा चिरन्तनी व्यथा
ममाभिशप्तजीवने त्वमागता तथा ॥१

त्वयैव सङ्गता चकास्ति काव्यसर्जना
स्फुरत्कलाकलापमण्डिता विलक्षणा

हृतैव तामसी विपन्निशीथिनी- कथा
ममाभिशप्तजीवने त्वमागता तथा ॥२

तवैव केशकुन्तले सवर्णकापिशम्
प्रलीनमद्य दृश्यते मदीयकिल्विषम्

उदेति नित्यमेव काऽपि मङ्गलप्रथा
ममाभिशप्तजीवने त्वमागता तथा ॥३

त्वयैव सार्थकीकृतं वयो वलं धनम्
कृतञ्च जाह्नवीमयं प्रशुष्कजीवनम्

त्वयैव गत्वरा शुभे! जिजीविषा श्लथा
ममाभिशप्तजीवने त्वमागता तथा ॥४

शरीरिणी त्वमेव मे ऽसि कान्तकल्पना
धृता करेऽद्य तूलिका मयाऽमृताऽनना

तटप्रपाततां न यान्ति तें मनोरथाः
ममाभिशप्तजीवने त्वमागता तथा ॥५



## कारुण्यशृङ्गाटके

वेदशास्त्रेतिहासत्रिवेणी नवा
ज्ञानविज्ञान - शैलेन्द्रसानूद्भवा,
निर्जरैर्नन्दिता कोविदैर्वन्दिता
क्लिश्यते साऽद्य नग्नाटिनां नाटके।

देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त कारुण्यशृङ्गाटके ॥१

दुग्धदोहा न सा नैव पीतोदका
नाप्रजा नैव वन्ध्या न सुप्तेन्द्रिया,
घुष्टहम्भारवा वत्सला नन्दिनी
संस्कृता वागियं पातिता पातके।

देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त कारुण्यशृङ्गाटके ॥२

क्वाद्य मे विक्रमोऽसौ विशालेश्वरः
साहितीसूत्रधारो नु धारेश्वरः?
क्वात्मजाः कालिदासादयो हन्त मे
इत्यलं संस्मरन्ती चिरं मण्ठते ।

देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त कारुण्यशृङ्गाटके ॥३

सर्वभाषासवित्री जगत्पावनी
यद्गतिर्जाह्नवी यद्रतिर्यामुनी,
वाङ्मयं लोलवेलाचलत्सागरं
विश्वरूपं दधाना न कैः सेव्यते?

देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त कारुण्यशृङ्गाटके ॥४

मुस्लिमैरप्यनर्थाय नो कल्पिता
सादरं साग्रहं साश्रयं जल्पिता,
किञ्च दाराशिकोहैः शिरस्याहिता
कैश्चिदन्धैरिदानीं कृता कण्टके ।

देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त कारुण्यशृङ्गाटके ॥५

यज्जिजीवाक्षतं यच्चिचिन्तामृतं
यद्यशश्चारु तेनेऽद्भुतं भारतम्,
भास्करं तल्लसद्वैभवं वाङ्मयं
स्वर्गवीमूलकं नेतरद् दृश्यते ।

देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त कारुण्यशृङ्गाटके ॥६



# रोदिति शकुन्तला

विस्मृतवान् दयितो दुष्यन्तः प्रीतिर्विसंष्ठुला
रोदिति , शकुन्तला ॥

आत्मानं गूहते कुटीरे न मुखं दर्शयते
रहसि निलीना जाने किं किं मनसा चिन्तयते
कृशतामेत्यनुदिनं यथाऽसितपक्षे चन्द्रकला ।
रोदिति शकुन्तला ॥१

नैवाकाङ्क्षति पितुरुत्सङ्गं न सखीपरिरम्भम्
नापि निलीय मालिनीपुलिने गणयति कादम्वम्
दृष्ट्वा लतां रसालाऽरूढां भवति परं विकला।
रोदिति शकुन्तला ॥२

पूर्ववदेव स दीर्घापाङ्गः प्रणयभरं तनुते
तमपि विलोक्य सजलनयनाभ्यां नो किञ्चित्कुरुते
शिथिलीभवति हृदयनिस्पन्दः श्वसितिश्चलाऽचला।
रोदिति शकुन्तला ॥३

प्रथमदिनं चिन्तया व्यतीतं कामनया द्वितयम्
दिनं तृतीयं व्यथयाऽतीतं परतो मरणभयम्
प्राणैषणा विनष्टा सम्प्रति किन्तु करोत्ववला ।
रोदिति शकुन्तला ॥४

मृगयापारङ्गतोऽसि पौरव ! वनसत्त्वं न हृतम्
तदपि तपोधनहितकामनया सत्त्वं मयि निहितम्
विलक्षणा प्रतिभाति तवेयं स्वजनविनोदकला ।
रोदिति शकुन्तला ॥५

क्वासौ प्रणयविनयकातरता क्व च तद् दाक्षिण्यम्
त्वन्नामाङ्कितमुद्रिकैव जातं जीवनमूल्यम्
आत्मायं संशये पातितो नियतिरभूच्छ्वला ।
रोदिति शकुन्तला ॥६

प्रभवसि सर्वमिहाचरितुं त्वं मधुरं प्रतिकूलम्
सत्कुलजोऽसि हरसि सदुपायैः प्रजाव्यथाशूलम्
सञ्जाता मृगतृषा मदर्थं सरिन्निकामजला ।
रोदिति शकुन्तला ॥७



# विशालायां महाकुम्भः

विधत्ते यत्र जागरणं हलाहलपो महाशम्भुः
अहो तस्यां विशालायामुपैत्यधुना महाकुम्भः ॥१

अमृतपाः केवलं वृन्दारका नो पुण्यकर्माणः
धराऽपीयं सुधागर्भेति चेतयते महाकुम्भः ॥२

भवेत्सुरसिन्धुरपवर्गप्रदा गोदाऽथ कावेरी
न सिप्राऽम्भस्तदूनमिति प्रमाणयते महाकुम्भः ॥३

भुजङ्गाः क्वापि नोऽमृतपायिनो भवितुं समर्थास्ते
पुरावृत्तं तदस्मान् साधु संस्मारयते महाकुम्भः ॥४

सुपर्णः स्यादनेहसि हन्त विनतानन्दजननो यः
सुधां लभते स एवेति प्रथां तनुते महाकुम्भः ॥५

समुच्छलतिस्म काव्यामृतकलश इह कालिदासोऽसौ
कथामिति वैक्रमीं संसूचयति निभृतं महाकुम्भः ॥६

कपर्दी यत्र- यत्र शिवो निलिम्पधुनी ध्रुवं तत्र
गिरिशगङ्गाऽन्वयव्यतिरेकमातनुते महाकुम्भः ॥७

विदधती विश्वमार्यं संस्कृतिर्या विश्ववाराऽभूत्
तदीयं गौरवं पुष्णाति पर्वमयो महाकुम्भः ॥८

सलिलदूर्वाऽम्रपल्लवपञ्चगव्यकुशादिभिर्निचितः
समग्रं भूतलं रक्षेदवन्तीस्थो महाकुम्भः ॥९

अगस्त्यो विन्ध्यवेधा जायतां कोऽप्यभिनवो राष्ट्रे,
चुलकयेद्यो व्यथाब्धिमितीव मन्त्रयते महाकुम्भः ॥१०



# वसन्तदोधकानि[1]

कुहू-कुहूरवमारटति पुंस्कोकिलोऽद्य हन्त ।
ज्ञातं, साधु विराजसे लोकेऽधुना वसन्त ॥१

निशि मरन्दरसवर्षणं दृष्ट्वा माकन्देषु ।
त्यजति को न याच्ञामहो जलदागमजलदेषु ॥२

मञ्जर्यः प्रतिपल्लवं सहकारस्य विभान्ति।
अगुरुतिलकरचनप्रभास्तासु मधुकरा यान्ति ॥३

प्रतिशाखं निष्पत्रताम् ऋतुविभवेऽपि विभाव्य।
हन्त मधूको विलपितः कुसुमदृगम्बु निपात्य ॥४

'सिन्धुकरे गिरिपत्रकं सरिता दत्तं येन ।
ज्वलति पलाशवनावली विज्ञातं ननु तेन ॥५

गाम्भीर्यं सिन्धोरहो गलितं वीचीभूय ।
कान्त! कथं कुलिशायसे मधुमासेऽप्यवधूय ॥६

तनुलतिका यौवनसुमा मनसिजगन्धा हन्त।
प्रोषितवल्लभमधुकरं द्रुतमुपगमय वसन्त ॥७

कृशा कृशेत्यनिशं रुषा श्वश्रूर्मामवलोक्य ।
वदति मृषा न ममौषधं प्रियमानयति विशोध्य ॥८

पिहू-पिहू न्विति जल्पसि प्रतिकाननमुन्मत्त ।
मामवलोक्य न लज्जसे चातक! कथं त्वमत्र??९

---

१. दोधकशब्दोऽत्रदोहापर्यायत्वेन प्रयुक्तः ॥

अधरोत्तरमवलोकते को नु वसन्तवलेन ।
देवरतां यातोऽधुना पितामहोऽपि सुखेन ॥१०

अञ्जलिजलपानक्रमैः सरश्शनैः क्षयमेति ।
तदपि निदाघपुरस्सरे मधौ यशस्समुदेति ॥११

रसिको नवश्छविल्ल इव किंशुकतरुर्विभाति ।
प्राचीपवनझरी न किं शठनायिकेव वाति ॥१२

समुपगते ऋतुवल्लभे कुसुमकोटिनिवहेन ।
विन्ध्यदरी श्रीमण्डिताऽऽख्यातुं शक्या केन?? १३

अभवन् काकानां कृते ननु पिचुमन्दफ़लानि ।
माकन्दप्रचुरेऽप्यहो मधौ सरसमधुराणि ॥१४

प्रतिवेशिनि! गच्छाम्यहम् अलमन्यथा विभाव्य ।
धेनुरियं परिचुम्बिता दुर्ललिता सम्भाव्य ॥१५

हरितश्शुकोऽसितः पिको वनं वर्णशंतगामि ।
आयाते नु वसन्तके रक्ताऽहं प्रभवामि ॥१६

धिक्त्वामयि नवमल्लिके भवसि सपत्नी हन्त ।
प्रोषितपतिकां मामहो त्वमपि निहंसि वसन्त ॥१७

जाङ्गलिको ग्रामे स्थितो जननि! तमीक्षितुमेमि ।
दृष्ट्वा नायास्यसि सुते! स्वयमथवाऽहमुपैमि ॥१८

शीतलपवनझरी कथं शनैः कदुष्णा भाति?
ज्ञातं साम्प्रतमेधते ग्रीष्मो मधुरपयाति ॥१९



## सपादिका मधुमासस्य[1]

मधुगन्धवशीकृतपानकलम्पटभृङ्गनिकायसमाकलिता
पुरुहूतदिगागतगन्धवहेरितपल्लवसञ्चयसञ्चलिता ।
ददृशे यदरालरसालवनी प्रतिशाखमनारतमञ्जरिता
वुबुधे सहसैव तदा धरणी मधुमासकथा पुनरापतिता ॥१

भुवि यावदिहोपससार जगत्त्रयजेतृमनोजवलाधिकृतः
सततं तमहोऽभिननन्द न को जयजीववचोऽमृतकन्दलितः ।
कलमाशु चुकूज पिकोऽविकलः प्रणनर्त शिखी द्युतिमण्डलितः
पिहु- पीहु इति प्ररराट मुदा ननु चातक इष्टसुखोच्छ्वसितः ॥२

परिणामपिशङ्गकदम्बरसालमधूकपलाशपलाशचयैः
प्रपतद्भिरियं पृथिवीरमणी विलसास लसत्पटवासमयैः ।
यकृदाकृतिपुष्पकदम्बकशोभितकिंशुककाननमात्तभयैः
परितोऽपि दहन्मदनज्वलनैर्ददृशे परिवारितमूर्ध्वरयैः ॥३

गृहदेहलिकाऽजिरपत्त्रिविटङ्कमहानसगोपुरपण्यगृहे
तटिनीपरिखागिरिनिर्झरकूपनिपानपयोधिसरिन्निवहे ।
कृमिकीटपतङ्गचतुष्पदखेचरवारिचरेऽथ जनप्रवहे
क्व न हन्त समाक्रमतेऽद्य वसन्त उपेत्य मदं विरहेऽविरहे॥४

विवधैस्सुमनोभिरशेषवनी कमनीयतमां द्युतिमातनुते
नवपल्लविनी गिरिजा व्रतती गिरिजश्च तरुश्छविमुञ्चिनुते ।
द्रुमपर्णनिरन्तरताऽन्तरितार्कमयूखवटश्श्रियमाश्रयते
निखिलं भुवनं परिवर्तयते मधुमाधवमास इहाक्रमते ॥५

पिचुमन्दतले कलविङ्कततिस्सविलासकलं समुपैति रतिं
दयितामुपलालयते च शुकश्चलचुञ्चुकृतिसौम्यविलोलगतिम् ।
विटपाद् विटपं पतति प्रसभं कलकण्ठपिकोऽपि विरौति नुतिं
प्रसृते रतिनाथसहायपरे प्रणयी नहि कोऽनुभवेदगतिम् ॥६

---

१. सवैया इति हिन्दीभाषायाम्।

रुचिरैव विभाति गृहे नगरे तरसा मधुमाधवमासकथा
स्थविरोऽपि समञ्चति देवरतां चटुवाचनिकः प्रमदासु यथा ।
अवलोक्य विलासकुतूहलकेलिरतान् युवकान् हृतचित्तरथा
ननु वर्षवरा कलयन्ति रुजं समजायत जन्म चिराय वृथा ॥७

ऋजुकं स्वच्छविल्लकदेवरमाशु विलोक्य निमीलितलोचनकं
मसिकाञ्जनकज्जलधातुचयैः कृतभण्डविदूषकरुद्रमुखम् ।
प्रहसन्ति सहेलमहो प्रमदाः स न वेत्ति रहस्यमिदं तनुकं
मुकुरे नहि यावदसौ स्वमुखं प्रविलोकयते कृतवञ्चितकम् ॥८

पणवानकदुन्दुभिझर्झरिकाकरतालविनोदितचारुलयैः
प्रकरोऽप्रतिभानवतामनिशं वृषभानुसुताहरिवृत्तचयैः ।
वसतौ ननु गायति फाल्गुनिकं[1] विविधैश्श्रुतिपेशलरागरयैः
सति दुःखचयेऽप्यविषादयुतः खलु जीवति लोक उदारनयैः ॥९

मदने धृतचापशरे मधुमास इहास्ति सुखं कुशलं न सतां
भजते नहि को निरपत्रपतां क्षयमेति च मानवलं जगताम् ।
ननु निर्वसनीकृतशाखिचया विधुरा उपयान्ति वशंवदतां
शिरसा नहि को मतिमान् मनुजो वृणुते महिमानमहो महताम् ॥१०

रतिरागविसंष्ठुलभावसृतिप्रसवेषु विकारकथाजनकौ
जननान्तरसौहृदसंस्मृतिदौ चितिमन्थसमुत्थसुधाघटकौ ।
वसुधाम्बरभोगसमिद्धरसायनपानकपानलसच्चषकौ
धृतहायनकौ धरणीकुचकुम्भनिभौ जयतां मधुमाधवकौ ॥११

●

१. फाग होरी वेति भाषायाम्।

## नौमि तं दिव्यनेपालदेशम्

सदाचारसद्धर्मपुण्याऽवशेषम्
अहं नौमि तं दिव्यनेपालदेशम् ॥

धृतस्सादरं भारतेन स्वशीर्षे
अलं राजते व्योमशृङ्गे गिरीशे

अशान्ते ऽपि विश्वेऽखिले शान्तवेषम्
अहं नौमि तं दिव्यनेपालदेशम् ॥१

पशूनां पतिर्देवदेवो महेशः[१]
ध्रुवं पाति यं सन्ततं व्योमकेशः

हिनस्त्यापगा वाङ्मती[२] पापलेशम्
अहं नौमि तं दिव्यनेपालदेशम् ॥२

यदीयाऽङ्गणे संस्कृतिस्सा पुराणी
त्रयीसम्मता सा च गीर्वाणवाणी

अनाचारसीम्नां कृते दुष्प्रवेशम्
अहं नौमि तं दिव्यनेपालदेशम् ॥३

निमिः पालको यस्य नीहारकीर्तिः
जनिं जानकी प्राप कारुण्यमूर्तिः

वसिष्ठाञ्चितं रामगाथाऽऽदिदेशम्
अहं नौमि तं दिव्यनेपालदेशम् ॥४

---

१. काष्ठमण्डपस्थः पशुपतिनाथः। २. वागमतीति।

सिषेवे यथा देवधानीं सुरेन्द्रः
तथेमं पुरा वीरभूपो महेन्द्रः

स्फुरद्विश्वशान्तिप्रभाते दिनेशम्
अहं नौमि तं दिव्यनेपालदेशम् ॥५

नृपालोऽधुना यत्र वीरेन्द्रनामा
प्रियैश्वर्यलक्ष्मीप्रतापैकधामा[१]

लसद्राजधर्मं दधच्छालुवेशम्
अहं नौमि तं दिव्यनेपालदेशम् ॥६

अयं शेवधिर्हिन्दुधर्माश्रितानाम्
त्रयी- प्रोद्गताऽशेषविद्याकलानाम्

सुनीरं सुवातं सुदृष्टिं सुवेषम्
अहं नौमि तं दिव्यनेपालदेशम् ॥७

शुभा भारती संस्कृतिर्विश्ववारा
कृताऽशेषविश्वार्यधर्म- प्रचारा

मुदाऽद्यापि पुष्णाति चञ्चद्विशेषम्
अहं नौमि तं दिव्यनेपालदेशम् ॥८

●

---

१. नेपालनरेशो वीरवीरेन्द्रविक्रमशाहस्तद्भार्या ऐश्वर्यलक्ष्मीश्च।

# नौमि तं बच्चुलालम्

गभीरं पयोधेर्महीध्राद् विशालम्
गुरूणां गुरुं नौमि तं बच्चुलालम् ॥

मतिर्यस्य माणिक्यभा- भासमाना
लसद्वैदुषी पाण्डिमानं दधाना
वपुर्गोकुलं यस्य चित्तं तमालम् ॥१

विभात्येव गीर्यस्य पाटीरचर्चा
प्रमाणीकृतस्थाणुकान्तासमर्चा
तिरस्कुर्वती जम्बुरम्भारसालम् ॥२

प्रसादं विषादं समं मन्यमानः
पृथिव्यां स जातोऽद्वितीयोऽसमानः
तपोविग्रहं शारदाहर्म्यपालम् ॥३

यदुत्सङ्गनीहारशैत्याभिषिक्ताः
वयं मौढ्यसन्देहसन्तापमुक्ताः
ध्रुवं प्राप्नुमः कीर्तिरत्नप्रवालम् ॥४

स्फुरद्गोमुखं काव्यदेवापगायाः
स्वयं तीर्थराजः प्रयागो धरायाः
सुखं मानसोल्लासिनं सन्मरालम् ॥५

श्रिया कालिदासः कवीनां सुबन्धुः
परोत्कर्षसंसिद्धिलीनश्शकन्धुः

प्रकृत्याऽऽशुतोषं प्रवृत्त्याऽनरालम् ।
गुरूणां गुरुं नौमि तं वच्चुलालम् ॥६



# जयति विबुधवाणी

जयतिविबुधवाणी (ओम्) जयति विबुधवाणी
नवरसरुचिरपदाढ्या जनजनकल्याणी ॥१

वेदपुराणशिवागमषड्दर्शनमहिता
गद्यपद्यकाव्योभयविविधभेदसहिता ॥२

सङ्गच्छध्वमितीव प्रथितसांमनस्यम्
ऋग्वेदे रोदस्याः शतसहस्रदृश्यम् ॥३

यदुपनिषत्सु ख्यातं जीवजगद्वृत्तम्
रज्जौ सर्पभ्रम इव मायाऽवृतचित्तम् ॥४

क्रौञ्चवधाच्छ्लोकत्वं याता कवेर्व्यथा
विश्वदुरितहन्त्री सा रामायणी कथा ॥५

धर्मस्थापनहेतोर्यदभूद् गृहयुद्धम्
महाभारते विलसति तच्चरितं शुद्धम् ॥६

राष्ट्रियतासन्देशः कविकुलगुरुकाव्ये
शतशतमहितादर्शा यद्दृश्ये श्राव्ये ॥७

यत्र बाणभट्टानां रसपेशलगद्यम्
यत्र च भवभूतीनां करुणरसं पद्यम् ॥८

निर्झरजलशिशिराणां गिरिमरुतां नृत्यम्
विन्ध्यपुलिन्दकुटीनां क्वचिदतिदारिद्र्यम् ॥९

ऋषिमुनिभिः परमेश्वरकृपया यदवाप्तम्
तपोऽनुभवपरिपूतं तदिह समाख्यातम् ॥१०

नेयं भाषामात्रं छन्दोविचितियुता
सुरवाणीयं दिव्या शाश्वतसृष्टिकथा ॥११

पाश्चात्त्योऽपि विपश्चिच्छ्रीविल्सननामा
यत्कवितामधु पीत्वा जातोऽश्वत्थामा ॥१२

महाकविर्गेटोऽसौ कविकुलगुरुकवने
स्वर्गधरासङ्गमनं समपश्यद्भुवने ॥१३

सुरवाणीनीराजनगीतमिदं महितम्
जनरुचिपोषकरं स्यादभिराजैर्भणितम् ॥१४



# देवभाषया विना

क्वास्ति पाण्डितीविकासो देवभाषया विना?
क्वास्ति संस्कृतिप्रकाशो देवभाषया विना? १

वेदशास्त्र - काव्यनाट्य- लोकवृत्तमण्डितः
क्वास्ति भावनाविकासो देवभाषया विना? २

काममेव सन्तु भूतले सहस्रशो बुधाः
क्वास्त्यसौ नु वेदव्यासो देवभाषया विना? ३

रज्जुभूतसंसृतौ फणिभ्रमे समुत्थिते
क्वास्ति संशयप्रणाशो देवभाषया विना? ४

भूरिसंख्यशब्दसञ्चयं सुखाय संहरन्
क्वास्ति सार्थकस्समासो देवाभाषया विना? ५

वाच्यवाचकावुपेक्ष्य काम्यमर्थमुद्गिरन्
क्वास्ति व्यञ्जनाविलासो देवभाषया विना? ६

यस्समादधाति सिन्धुमेव विन्दुविस्तरे
तादृशः क्व कालिदासो देवभाषया विना? ७

विश्ववन्धुता वरं, न लोकमर्दि जीवनम्
क्वेदृशो वचोविलासो देवभाषया विना? ८

रामराज्यमुज्ज्वलं प्रतिष्ठितं पुनर्भवेत्
क्वेति भारताऽभिलाषो देवभाषया विना? ९

देवभारतीमधीत्य जन्म सार्थकं न किम्
क्वाऽभिराजकाव्यलासो देवभाषया विना? १०

●

# रविभास्वरं प्रभातम्

लोचनमुन्मीलय समागतं रविभास्वरं प्रभातम्
अपयातं घनतमोवितानं दिङ्मण्डलमवदातम् ॥ १

सितरेखाङ्कित इवाऽलक्ष्यते वकपङ्क्त्याऽम्वरभालः
धवलवसनपट्टिकाऽवृतो ननु वृहदुत्सवस्तमालः ॥ २

विकसितमल्लीकुसुमरसामृतरसिकाऽटति मधुपाली
अधिवाटिकमिह रौति सगुञ्जं माद्यति नवशेफाली ॥ ३

नृत्यति पारावतोऽनुरक्तश्चटका तनुं धुनीते
निशाविरहितं प्रेक्ष्य सुतं गौर्हम्भारवं प्रसूते ॥ ४

मदिरमधूकसुमोद्गतसौरभचयैर्लसन्ति दिगन्ताः ।
प्रतिसहकारवनं सन्दधते निभृतपदानि वसन्ताः ॥ ५

अनाश्रान्तकण्ठः कलकण्ठः कूजति सदयममन्दम् ।
उन्मदयति चातकोऽपि लोकं श्रयन्क्वापि पिचुमन्दम् ॥ ६

उदयति रवौ समेऽपि समुदिताः संसरन्ति संसाराः ।
प्रवहन्त्यः परिलक्ष्यन्ते हृदि-हृदि वृहदुद्यमधाराः ॥ ७

तुहिनकिरणगलिताम्वुविन्दुचयलसिता विटपिपलाशाः ।
रविकरनिकरविभासितवपुषो भान्ति मुकुरसितहासाः ॥ ८

पुष्करिणी कमलिनीविलसिता कर्षितवहुविटभृङ्गा ।
कारण्डवटिट्टिभवककोकमदिरवचनाऽञ्चदनङ्गा ॥ ९

हृदयङ्गतचम्पकप्रभृतिसुमपरिमल एति समीरः ।
मदघूर्णितकरिकलभसन्निभो दोलायितकरवीरः ॥ १०

शनैः शनैरपहाय पुरन्दरदिशमम्वरतलमध्यम् ।
स्फुटदुर्लक्ष्यतनुर्विकर्तनस्समुपसरति धृतभव्यम् ॥ ११

●

# वन्दे राजस्थानम्

सिकताभ्योऽपि समुद्यति तैलं यत्र स्वतः प्रमाणम्
वन्दे राजस्थानम् ॥

कनककपिशकिरणैर्वितरति ननु यस्मै रविः प्रभातम्
अमृतमयूखैर्विधिर्निशीथं कुरुते हिमावदातम्
तारकितं वियदङ्गणमञ्चति शतमल्लिकाभिमानम्
वन्दे राजस्थानम् ॥ १

महिममण्डिता भारतधरणी यस्यैकस्य महिम्ना
स्वाभिमानगुरुगौरवभारं स्वदते हन्त गरिम्णा
सञ्जीवयति सकलमपि राष्ट्रं दत्वाऽक्षतमवदानम्
वन्दे राजस्थानम् ॥ २

नृपजननीगौरवमधिरोहति धात्री पन्नाबाई
नन्दसूनुविरहोन्मदगतिका गायति मीराबाई
निर्माणस्थलमितिहासानां मानवतामुद्यानम्
वन्दे राजस्थानम् ॥ ३

धर्मधुरीणं नयप्रवीणं संस्कृतसंस्कृतिमूलम्
दानदयादाक्षिण्यसमन्वयशरणपयोनिधिकूलम्
यत्र भणति पुष्करमद्यावधि धातृमखोपाख्यानम्
वन्दे राजस्थानम् ॥ ४

मरुवणगोपितसलिलविग्रहा सरस्वती पौराणी
प्रतिष्ठिता जनमनसि वाङ्मयी कविताऽभूत्कल्याणी
यत्र रक्षितं समवलोक्यते गुणसम्पदां निधानम्
वन्दे राजस्थानम् ॥ ५

●

## भारतीया संस्कृतिः पुनरेधताम्

विन्दते स्वाधीनता पञ्चाशतं
भारतीया संस्कृतिः पुनरेधताम् ।
राष्ट्रमेतत् प्राक्तनं निजगौरवं
सार्जवं भूयोऽपि सम्प्रति विन्दताम् ॥१

तामसी वीता निशा चेतोहरी
दीप्तभारतभास्करो भुवि भासताम् ।
भूतलं स्वं स्वं चरित्रं सम्मतं
भारतात्पुनरेकवारं शिक्षताम् ॥२

संवदन्तु जनाः समं गच्छन्त्वलं
धीमतां हृदयानि साधु समञ्जताम्[1] ।
प्रतिगृहं पठ्येत वेदः, संस्कृतं
राष्ट्रभाषाया महिम्ना राजताम् ॥३

लोकतन्त्रं जनहितं संसाधयेत्
पार्थिवः प्रकृतेर्हिताय प्रवर्तताम् ।
रिपुरवो दिशि पश्चिमायां पुनरहो
हूणहन्ता पुष्यमित्रो बोध्यताम् ॥४

कृत्तबाहुर्दृश्यते भारतधरा
पुनरखण्डं भारतं परिकल्प्यताम् ।
यावदास्ते परवशस्सिन्धुर्नदो
राष्ट्रगीतं सार्थकं कथमुच्यताम् ॥५

नैव दैन्यं, नैव चापि पलायनं
भारतं वक्तीति रिपुभिर्ज्ञायताम् ।
अस्तु सिद्धान्तेषु गान्धिमताऽदरः
व्यवहृतौ वीरस्सुभाषो गृह्यताम् ॥६

सौहृदं सव्येऽपसव्ये शात्रवं
यस्य यद्रुचितं तदेव विचीयताम् ।
हृदि-हृदि स्वातन्त्र्यमन्त्रो भूतले
विश्वदेशिकभारतस्य महीयताम् ॥७

●

१. हृदयानि हृदयमिति। हृदयं समञ्जताम् इति आर्षप्रयोगः

## शतं वन्दनम्

काशते जीवनव्योम्नि या चन्द्रिका
चन्द्रिकाया नु तस्याः शतं वन्दनम् ॥

भूतले सन्ति कूपास्तडागा न किं
भूरितोयास्तटिन्योऽवदाता न किम्?
भूधरोत्तुङ्गभृङ्गोच्छलद्वारयो
मञ्जुमञ्जीरनादाः प्रपाता न किम् ?

यति शान्तिं तृषा यत्प्रपावारिणा
हन्त तस्याः प्रपायाः शतं वन्दनम् ॥१

का न सन्तीह रात्रौ समृद्धिङ्गताः
कैरवाणां वनी, यूथिका ह्लादिनी।
दृष्टिवन्धक्षमा नव्यनीहारिका
वाटिका चापि वासन्तमाकन्दिनी ॥

किन्तु यद्गन्धवातैर्जगन्माद्यते
मल्लिकाया नु तस्याः शतं वन्दनम् ॥२

प्रावृषि द्योतते किन्न सौदामिनी
किन्न खद्योतमाला मुधा भासते।
काननोद्दामदावैर्दिगन्ताः क्वचिद्
भास्करालोकविस्तारणं तन्वते ॥

किन्तु देवालये शान्तशान्तं ज्वलद्
दीपिकाया नु तस्याः शतं वन्दनम् ॥३

आविलं कुर्वते सौम्यशान्तं जलं
ध्वस्तशैवालमाला वकाः कच्छपाः।
भङ्गुरप्राणयात्रा झषाश्चञ्चलाः
क्रौञ्चकारण्डवाश्चाऽप्यपास्तत्रपाः ॥




धारयन्त्यास्तथाऽप्यम्बुजाच्छादनं
वापिकाया नु तस्याः शतं वन्दनम् ॥४

लोकसम्पीडकाः सन्ति भूमौ न किं
स्वार्थसिध्द्यै कमप्याशु निघ्नन्ति ये ।
ध्वंसलीलारसास्ते जगद्रावणा
राघवानप्यसीतान् प्रकुर्वन्ति ये ॥

तण्डुलान् पीडयन्त्याः परं कण्डनैः
कण्डिकाया नु तस्याः शतं वन्दनम् ॥५

भृङ्गमालाऽनिशं पुष्पवल्लीश्रिता
तद्रसैरात्मतोषं विधत्ते न किम् ।
लम्बचञ्चुर्विहङ्गोऽपिवद्धादरो
भिन्नगर्भं प्रसूनं विधत्ते न किम् ।

किन्तु पुष्पासवैर्या प्रसूते मधु
मक्षिकाया नु तस्याः शतं वन्दनम् ॥६

पूजिता येऽभिराजेन हृन्मन्दिरे
हन्त जाता भुजङ्गास्त एवोत्कटाः ।
भाग्यभानूदये ते बभूवुर्घनाः
स्निग्धसौजन्यवात्सल्ययोः का कथा॥

सत्यपीत्थं यया वर्धितोऽसौ सदा
चण्डिकाया नु तस्याः शतं वन्दनम् ॥७



## जीवनं वृथा

ह्यस्तन उदयोऽद्यतनं पतनम्
जीवनं वृथा बुद्बुदोपमम् ॥

संशये सदा यात्राऽऽरब्धा
कीर्तिः कौलीनैः सन्दृब्धा

प्रत्यूहैर्निचितमभूद्यतनम्
जीवनं वृथा बुद्बुदोपमम् ॥१

एकाकि नागतं क्वापि सुखम्
ध्रुवमानिनाय किञ्चिद्दुःखम्

विषविन्दुच्छुरितं यथाऽमृतम्
जीवनं वृथा बुद्बुदोपमम् ॥२

उत्कोच इवाऽहं सञ्जातः
स्वार्थान्धिकरे सायं प्रातः

तुल्यं मम कृते गृहं विजनम्
जीवनं वृथा बुद्बुदोपमम् ॥४

त्यक्ता नु कियन्तो निर्मोकाः
अपगतास्तथापि न ते शोकाः

प्रतिपदं समुत्थं कदर्थनम्
जीवनं वृथा बुद्बुदोपमम् ॥५

पश्याम्यधुना विगलन्मोहम्
भावये मनसि सोऽहं सोऽहम्

प्रतिदिशं परीतं निरञ्जनम्
जीवनं वृथा बुद्बुदोपमम् ॥६

●

## अभिलषामि

अभिलषामि
कश्चिन्महातपा जावालिः
ममापि पूर्वजन्मवृत्तमाचक्षीत
यदाकर्ण्य
सर्वं संस्मृत्य
अहमपि स्वपूर्वजन्मप्रियां
कामपि महाश्वेतां
सन्द्रष्टुकामो
मुक्तविहायसि
समुत्पतेयम् ॥१

अभिलषामि
यदुत्पतितुमशक्तोऽहमपि
शाकुनिकैश्चाण्डालै-
र्गृहीतो भवेयम्
चाण्डालदारिकया च कयाचित्
स्वगुणमहिम्ना
समुपायनीकर्तुं
विदिशाऽधिपतेः
कस्यचिच्छूद्रकस्य
चरणकमलमूले
समुपस्थापितः स्याम् ॥२

अभिलषामि
यद्राज्ञा पृष्टोऽहमपि
जावालिश्राविताां
मदात्मकथां
समुपवर्णयेयं
शापमुक्तश्च भवेयम्

म्रियेत शूद्रकः
जीवेच्चन्द्रापीडः
विलसेत्कादम्बरी !!

म्रियेत शुकशावको
जीवेद् वैशम्पायनो
विलसेन्महाश्वेता
अभिलषामि......॥३

# कदा मयाऽभिलषितम्

कदा मयाऽभिलषितं
यदहं कोविदोचितपदे स्थापितो भवेयम्?
कदा वा मया संघुष्टं
यदहमस्मि विद्वन्मुकुटमणिः?
परन्तु किं करवाणि?
मम स्कन्धोपरि भुशुण्डीं निधाय
ये गुलिकाप्रहारमैच्छन्
त एव मां तुहिनाचलशिखरमधिरोपितवन्तः
त एव सम्प्रति मद्व्याजेन
आत्मस्वार्थान् साधयन्ति
वेतालकल्पोऽस्म्यहं सञ्जातः
एतच्छरीरमात्रं ममास्ति
परन्तु शरीरसञ्चालकं चैतन्यन्तु परेषामेव ॥१

तैरेव चालितश्चलामि
तैरेव योजितो युनज्मि
तैरेव लिखितं लिखामि
तैरेव पाठितं पठामि
तैरेव श्रावितं शृणोमि
तैरेव
हन्त, तैरेव......
यथा नियुक्तोऽस्मि तथा करोमि ।

कियत्कालावधि
शिखरेऽस्मिन् स्थास्यामि
को नु जानाति?
मन्ये तदिच्छासमकालमेव
एषा मे
प्रतिष्ठाशिखरस्थितिः ॥२

●

## स्वप्नपरम्परा

प्रथमे खलु स्वप्नेऽपश्यमहं
शून्ये पथि प्रयान्तीं
रम्भां
नलकूवरप्रणयिनीं
भूषणभारभङ्गुरां
वासकसज्जामभिसारिकाम् ।

अकस्मादेव
समुज्जिजृम्भे तां निपीय
मम हृदयस्थो रावणस्साटोपं
वाडवाग्निनिर्मथित
उद्वेल इवाम्भोनिधिः
किन्तु
तावता कालेनैव पुरस्सृतवती रम्भा
रावणोऽपि मे धनदीभूय शान्तो जातः
प्रभञ्जनविद्रुतो
वार्धुकवलाहक इव
कथमिति?
नाहं जाने ॥१

द्वितीयेऽपि स्वप्ने
तुहिनाचलवनराजिष्वाहिण्डमानः
अच्छोदसरोवरोपकठस्थे
शिवायतने
भगवन्तं भूतभावनम्
उपवीणयन्तीं
महाश्वेतामहमपश्यम् ।
तां दृष्ट्वैव
भूभ्रंश इवाजनि ममाङ्गेषु
तल्लावण्यदीपज्वालासु

निर्विवेकशलभ इव
समुत्पतितुमियेष
मदन्तःस्थो वैशम्पायनः ।
किन्तु तावदेव महदाश्चर्यं सञ्जातम्!
वैशम्पायने तस्मिन्नेव
समुदतिष्ठत्सहसैव चन्द्रापीडः
घनसारशीतलधिषणः
सारङ्गमृदुपदक्रमः
यस्तल्लावण्यमुकुरे समपश्यत्
सुभगसौन्दर्यलहरीम्
अखिलभुवनाण्डेश्वर्याः ।
तत्समक्षमागत्याऽसौ
प्रणनाम सप्रणयं
मृगशावको यथा नु सज्जते
स्वामिदुहितुश्चैलाञ्चले
तञ्च
भद्रवार्ताभिस्सम्भावयामास
गन्धर्वतनया महाश्वेता ॥

सर्वमिदं विसंवादि
झटिति संवादि जातम्
कथमिति?
नाहं जाने !!२

तृतीये किल स्वप्ने
आकाशादवतीर्य शनैः शनैः
शम्भुकपर्देषु भ्राम्यन्तीं
ततश्चापि निर्गत्य
तुहिनगिरिकन्दरासु प्रवहन्तीं
वसुधाऽऽस्तीर्णक्षीरधवलां कौमुदीमिव
सिद्धसिन्धुमपश्यमहं गङ्गां
शन्तनुभूतोऽहं
गाङ्गे सलिलप्रवाहे

यावत्तस्याः सगुणविग्रहं पश्येयं
तावदेव प्रोन्मीलिते नयने
स्वप्नभङ्गश्च सञ्जातः ।

परन्त्विदानीं
न पूर्ववत् किमपि परिवर्तनं जातम् ।
यतो हि
साक्षाज्जाह्नवीभूता त्वमेव
मत्सम्मुखं तिष्ठन्ती सन्दृष्टा ॥३

# दूर्वा

काण्डात्काण्डं प्ररोहन्ती
राजनीतिदूर्वा
पश्य
हवालाकाण्डमधिरूढा
तत्संस्पर्शाच्च विषाक्ता सञ्जाता
सम्प्रति
दूर्वाभोजिनो
राजनेतृकृष्णसाराः
विषमूर्च्छिताः
प्राणव्यथां सहमानाः
स्वनियतिं प्रतीक्षन्ते ।

न केवलं कृष्णसारमृगा एव
केचन
वनमहिषा गण्डका गवया वनवराहाश्चापि
दूर्वाभक्षणेनानेन
संशयितप्राणा अवलोक्यन्ते ।

किं ब्रवीषि?
मृगयूथपस्तावत्
कथमकुतोभयः सन्
स्वैरं विहरति?
बन्धो !
कोऽयं ते व्यामोहः?
सिंहोऽपि किं दूर्वां चरति?
मृगयूथपोऽसौ
(नर) सिंहनामा
यः खलु
केवलं मांसमश्नाति ॥

●

## दूर्वाभाग्यम्

मांसाहारिणस्सिंहा मह्यं रोचन्ते
न पुनश्शाकाहारिणो मृगा:!
सिंहा यं कमपि वन्यजीवमाक्रमन्ते
तं सकृदेव निहत्य भक्षयन्ति
किन्तु शाकाहारिणो मृगाः
गवया गण्डका वनमहिषाः
नित्यवैरिणश्शाकानां
प्रत्यहं घातयन्ति ते दूर्वावनीम् ॥१

यावदेवासौ विकसितकेसरा
शुकोदरनीला
कोमलकोमला
काञ्चिद् वृद्धिं तनुते
तावदेवैते
सझम्पमाक्रम्य
तां निर्दयं भक्षयन्ति
सुषमां तस्याः खलीकुर्वन्ति
तां समूलमुन्मूलयन्ति ॥२

तत्किं विधात्रा
दूर्वाया भाग्यलिपौ
सौभाग्यस्य पराकाष्ठा न लिखिता?
किं दूर्वावनी
कदाप्यलूनशिखा नावलोकयिष्यते?
किमेते शाकप्रिया वनपार्थिवाः
प्रत्यहं
तां खण्डितशोभां
संशयितजीविताञ्चैव
विधास्यन्ति? ३

# मृतघट्टोऽहम्

मृतघट्टोऽहं, मृतघट्टोऽहं
जीवतां जनानां घृणास्पदं
प्रेतानां वंशीवाटोऽहम्
मृतघट्टोऽहम् ॥

जनिता वाटिकाः, कृताः सौधाः
व्याततां नभसि कीर्तिस्तम्भाः[१]
तेजोमहालयाः[२] कति कति नो
रेजिरे प्रियामधुसंस्मरणाः
सौन्दर्यचेतनासाक्ष्ययुता
लसिता कति नो खर्जूरवहाः[३]
कति नो चित्तौड़जयस्तम्भा
हृदयेषु निखाताः शत्रूणाम्?

मदगर्वितलघुमाणवकोऽयं
विदधे किं किं नो तारुण्ये?
उर्वश्यभिनन्दनसम्भारे
चक्लृपे कति नो नन्दनवनिकाः?

हा हन्त न जाता मम स्मृति–
र्यावन्निःश्वासगमाऽगमनम् ।
का कथा समर्चन-पूजायाः
प्रत्यभिज्ञानमपि मे न कृतम् ।
मृत्तिकामाधवोऽयम्मूढः
किं वेत्ति यदन्तिममित्रमहं
यो महाकालपथमतिव्रजेत्
तादृश ऐरावतगजोऽस्म्यहम्

संङ्गं जह्यान्ननु जगदखिलं
प्रियजनाः समस्ता विमुखाः स्युः

---

१. समुद्रगुप्तस्य प्रयागकीर्तिस्तम्भः। २. ताजमहल इति। ३. खजुराहो।

स्वागतं भणति बाहू प्रसार्य
यस्तदपि, स एव सुभट्टोऽहम्
मृतघट्टोऽहम् ॥१

न मया दृग्भेदः क्वापि कृतो
न च समाकर्षितः प्रलोभनैः
क्रीतोऽहं नाप्यैश्वर्यविभव–
वस्त्राभूषणसौन्दर्यचयैः
राजा राज्ञी योगी भिक्षुः
करहीनः खञ्जोऽन्धो बधिरः
पापी पुण्यात्मा दानपरो
व्यभिचाररतोऽथ मनोविधुरः

ये केपि समागच्छन् नु यथा
विलपन्तोऽथवा हसन्तो वा
वसुधामाकाशं दिगन्तरं
क्रन्दनैर्निजैर्द्रढयन्तो वा
कर्पूरचन्दनाऽगुरुलिप्ताः
कन्थावेष्टितवपुषः केचित्
केचित्सम्मर्दवाद्यसहिताः
केचित्कृत्ताङ्गाः सङ्कुचिताः

कस्यापि कृते नाऽहसं किन्तु
नाथवा स्फुटितहृदयो व्यलुठम्
अचलोऽविचलो निश्चलोऽभवं
सच्चिदानन्दकल्पोऽविकलः
निष्पक्षतयाऽचञ्चलो दृढो
न मनाग् भीतो न च करम्बितः

एतावद् दायित्वं प्राप्तं
विषमं सर्वं करवाणि समम्
यद्वस्तु यतो वा समागतं
निदधै तत् तस्मिन् तदन्तरे ।

निमिषैर्ननु कृतवानहमेतत्
मृत्तिका मृदायां समाहिता
सलिलं सलिले गगने गगनं
पावके पावको निवेशितः
पवनश्च ततः पवनेऽन्तरितः
सर्वं क्षणमात्रे निर्व्यूढं
दवदहनीभूय कृतं
तद्वै
मालाकारेण न यत्सर्वं
कथमप्यशाकि कर्तुं यत्नैः ।

कियदपि खलु कश्चित्प्रगल्भतां
निजसद्गुणगर्वैः प्रकाशतां
स्वीयं महिमानं प्रशंसतां
स्वर्गञ्च गरिम्णा सनाथतां

मादृशः किन्तु निःस्वार्थबन्धु-
रथ मादृश एव साम्यवादी
कुत्रापि न कश्चिन्मिलिष्यति
वादी भवताद्वा प्रतिवादी ।

लभ्यो यः प्रतिपदमनावृतोऽ
सौ कालगृहस्य कपट्टो[1]ऽहम् ।
मृतघट्टोऽहम् ॥२

प्रज्वलति कृशानुर्मम वक्षसि
प्रतिपलं प्रतिक्षणमहर्निशं
किं जातु वेदनामहमवदं
स्फुटितं वदनात्किं क्वापि वचः?

द्रावं द्रावं ननु पयोमुखान्
शिशुशवानपश्यमहं दग्धान्

१. कपाटइति। प्रयोगस्वातंत्र्यम्।

जननीममतायाः सिताञ्चलं
प्रज्वलितप्रायमपश्यमहम्
ज्वालासु दहन्तमपश्यमहं सिन्दूराऽरुणिमानं ललितं
क्रन्दितप्रायमधरोष्ठपुटं
हतगृहचीत्कृतेष्वपश्यमहम्!
किम्मयि काचिदपि चितिर्नासीत्?
किं नासीत्स्वीयं मम हृदयम्?
अनुभूतिर्नासीत् काचिन्मयि
किं नासीन्मदहङ्कृतिः कापि?

तुहिनाचलशिखरनिभः परन्तु
कम्पितो न वाताहतोऽप्यहम्
आज्ञावशगो नु निजस्रष्टुः
संस्खलितोऽभूवं नो विज्ञः
मां निर्मितवान् नु यदा धाता
सान्त्वयाञ्चकार मुहुर्वारम्
क्रीडानि यदप्यहमात्मरुचिः
मा भैषीः, कथय हृदाऽवगतम्?

ओमित्यवदं सर्वथाऽवदं
शपथं तमेव पालयन्नहं
अधिमहाकाललीलं सम्प्रति
साक्षीभूयाऽहं दूरेऽस्मि!

प्राज्वलदग्निर्वक्षसि सततं
तटिनी शैतल्यं ददौ किन्तु
ज्वलिता तनुरात्माऽऽर्द्रतां ययौ
वात्सल्यमीदृशं प्रभुर्ददौ
दद्यान्मुक्तिं यश्चिन्ताभ्य-
स्तादृशोऽद्भुतस्सङ्कटटोऽहम्[1]
मृतघट्टोऽहम् ॥३

१. संकट इति।

बाढं, स्वप्रकृतिर्विज्ञाता
स्वीये वीभत्से तनुमनसी
मङ्गलवैरि स्वीयं रूपं
स्वीयं क्रन्दनञ्च शून्यत्वम् ।
एतदपि न मामवगमय त्वं
परिगतोऽस्मि यद् भूतप्रेतैः
परितोऽप्यवकीर्णा ममाङ्गणे
अवदग्धभस्ममज्जामदिराः
भृत्वा नु कपालेऽरुणरुधिरं
योगिन्यो नग्ना नृत्यन्ति
मृत्योर्मन्त्रं नित्यं जपन्ति
कापालिकसंघा विकस्वराः वेतालाश्च भृत्यायन्ते ।

न तथापि कदाचिदहं व्यलपं
ध्यात्वा स्वीयां दुर्भाग्यकथां
नोऽथवा जातु गर्वितोऽभवं
दृष्ट्वा स्वमदोल्वणयौवनकम्
आगत्य मुहुर्मच्छ्रवणपथं
'सोहर'-ध्वनयो ननु निवर्तिताः[१]
बिरहा-मल्हार-फाल्गुनिकानां[२]
वन्धा रसवन्तःसन्त्रुटिताः ॥

नाङ्गणे मयाऽऽकर्णितो निजे
मञ्जीरछमत्कारो मधुरः
न मया गणिता वेदना जातु
दयितस्य, निवद्धा नूपुरेषु
अर्धोदितचन्द्रोऽवितथमेव
न मयाऽवगुण्ठने विलोकितः
नोत्सङ्गमसृणचषके कलितं
शैशवक्षीरमपि विपाण्डुरम्
शतमिन्द्रजालमप्यनेहसो

१. सूतगृहगीतमिति। पुत्रजन्मावसरे गीयमानो गीतविशेषः । २. लोकगीतविशेषाः।

ममतातमालकुञ्जोऽविरलो
विभवनामगणितपुण्यचयो
नैतन्निखिलं मयका दृष्टम् ।

ननु महाऽमङ्गलश्शून्योऽहं
ननु महाऽकिञ्चनः क्रूरोऽहं
निष्ठुरो निर्ममः पापकटु–
र्मरणैकभटो ननु घृणास्पदम्
जीवितशेषो नु निमिषमात्रं
प्रणयास्पदमहं न कस्यापि
जर्जरं कुष्ठगात्रं तदहं
यत्संस्पर्शोऽपि न वरणीयः ॥

ननु धन्योऽसौ स्रष्टा परन्तु
येनाऽत्र टङ्किता भाललिपिः
मादृशः किन्तु सौभाग्यसिद्ध
इह भूमण्डले क्वचिद् दृष्टः?

ब्रह्माण्डवैभवं तिरस्कृत्य
उपविष्टश्शम्भुर्ममाङ्गणे
रोदितु गायतु वा रुद्राणी
गणपतिरपि कामं प्रगल्भतां
तमनन्तवदान्यं देवपतिं
पशुपतिमवाप्य धन्यो जातः
आसं महाऽशिवश्शिवः किन्तु
सञ्जातः कृपणाद् दानपरः ॥

विश्वसिहि शिवत्वाऽधारोऽहं
परिपूतश्चामृतकलशोऽहम् ।
मृतघट्टोऽहम् ॥४

●

# उपालम्भो रोहसेनस्य

रदनिके!
महाऽनृतवादिनी त्वमसि
इतः प्राक्
अष्टादशशतानि वर्षाणि व्यतीतानि
यदा त्वम्मां वञ्चितवती
कथमिति चेत्?
शृणु, संस्मारयामि त्वाम्
सुवर्णशकटिकाक्रीडनकातरं
प्रतिवेशिशिशुसमृद्धिस्पर्धिनं
नवनीतधियं
विकलं शिशु मां
प्रलोभयन्ती सान्त्ववचनैः
उपच्छन्दयन्ती च मृच्छकटिकेन
त्वमेवोक्तवती—
'तात! पितू ऋद्ध्या
पुनस्सुवर्णशकटिकया क्रीडिष्यसि' ॥१

रदनिके!
त्वदङ्कपालितोऽहं
क्रीडाशिशुरिव त्वत्करेण सदयं भोजितो
जननीं त्वां मन्यमानः
शान्तोऽभूवं
व्यथा मेऽपगता
सन्तप्तगात्रोपरि मे पाटीरलेप इव सञ्जातः
मन्मनोऽम्बरस्था नैराश्यकालमेघाः
सहसैवोपद्रुताः
व्यचिन्तयमहं
त्वमसि मम जननीकल्पा
जननी पुनः नाऽनृतं भाषते
स्वदारकं सा न जातु वञ्चयते

नाऽतिसन्धत्तेऽसौ वत्सलतया
जननीवचनं भवति वेदवाक्यं
स्वसन्ततेः कृते सर्वरोगमहौषधं
तस्मात् त्वद्वचस्सान्त्वितोऽहं
निश्चिन्तोऽभूवं
प्रगाढो जातो मम विश्वासः
तातस्य समृद्धिदिवसान् प्रतीक्षमाणः
सुवर्णशकटिकाञ्च दिदृक्षमाणः
वहुतिथं कालावधिमनयम् ॥२

हा हन्त, रदनिके!
तथापि नाद्यावधि
समागतोऽसौ अमृतसिद्धियोगः
ऋद्धिर्न पुनरागता पितुर्गेहे
न परिवर्तिता जर्जरशाटी ममाम्वायाः
न पुनरुपरूढा चत्वरवृषभस्थितिः
आर्यमैत्रेयस्य
न चोपनीता ममापि सुवर्णशकटिका
मृच्छकटिकाऽपि मे विनष्टा
निर्माणसमकालमेव
प्रथमोदविन्दुभिराषाढस्य
एष निश्शकटिकोऽस्मि सञ्जातः
रदनिके!
सर्वथा निश्शकटिकः ॥३

रदनिके!
त्वन्तु पञ्चत्वमवलम्ब्य मुक्ताऽभूः
जनकोऽपि मे चारुदत्तः
सद्गुणानां कल्पवृक्षो
यशश्शेषतामुपगतः
जननी चापि मे धूता

धैर्यसंयमशालभञ्जी
शीलसमुदाचारप्रतिमा
प्रतिक्षणमश्रुमुखी
पितुर्यशसां धवलिमकल्पा
तेनैव सह पतिलोकं प्रयाता
किन्तु नाऽहं मृतः
रदनिके! नाऽहं मृतः
एषोऽहं रोहसेनः
शपे त्वद्वात्सल्येन
नाऽहं मृतः
सुवर्णशकटिकाप्राप्त्याशया
मृतोत्पन्नः, मृतोत्पन्नः, मृतोत्पन्नः
दशवारं, विंशतिवारं, पञ्चविंशतिवारं
पूर्वं मृतः
पश्चात्समुत्पन्नः ॥४

हा हन्त, रदनिके !
प्रतिजीवनं प्राप्तम्मया तदेव गृहं
यदासीज्जर्जरकुड्यं
नागदन्तावलम्बितजीर्णमृदङ्गं
विपन्नमैत्रेयं, दत्तसन्धि
प्रविष्टशर्विलकं
मुषितवसन्तसेनाऽभरणं
पणीकृतममाम्वारत्नावलीकं
शिथिलीभवत्सुहृज्जनसमुदायम् ॥५

रदनिके!
पश्य नियतेर्विलासं
ममाऽदृष्टस्य वा वैभवं
प्रतिजीवनं
वन्द्यचारुदत्तमेव पितरं वृतवानस्मि

आर्यां धूतामेव मातरं
केवलं त्वां न दृष्टवानस्मि
न च महीयसीं वसन्तसेनां
मय्यतितरां स्निह्यन्तीं
मत्सुवर्णशकटिकासंविधानकसखीम् ॥६

रदनिके! मामपहाय क्व गताऽसि?
किं स्वमृषासान्त्वनाभिर्भीताऽभूः?
अद्याऽप्यहं त्वदाश्वासनं न विस्मृतवानस्मि ।
आशङ्कामग्नः
कौतूहलाऽक्रान्तः
आनन्दान्दोलितः
चञ्चलशिरोधरः पारावतशावक इव
उपर्युपरि
अधोऽधः
तिर्यगवेक्षमाणोऽस्मि ।
हा दैव!
न जाने कस्माद्दिगञ्चलादवतरेत्
सुवर्णशकटिका ॥७

आकाशात् समापतेत्
भूतलाद्वा समुत्तिष्ठेत्
वामदक्षिणतो वा सहसोद्भवेत्
रदनिके!
चकितचकिताभ्यां नेत्राभ्यां
क्षुत्क्षामकण्ठोऽप्यहं
सुवर्णशकटिकां प्रतिक्षणं प्रतीक्षमाणोऽभूवं
परन्तु
धिक्त्वामनृतवादिनि!
धिक्त्वां मुधाप्रलोभिनि!
सुवर्णशकटिका नाऽपतिताऽद्यावधि
नोत्थिता, न वा कुतोऽपि प्रकटीभूता

कस्मिन्नपि मे जीवनक्रमे
आः रदनिके!
आभुग्ना मे प्रतीक्षारता ग्रीवा
चिन्ताजडं जातं मे दर्शनम् ॥८

रदनिके!
साम्प्रतं हताशोऽस्मि सञ्जातः
त्वत्सान्त्वनावैयर्थ्यमवगच्छामि
सुष्ठ्वनुभवामि राष्ट्रेस्मिन्
रोहसेनानां भविष्यम्!
एषु व्यतीतप्रायेषु
अष्टादशशतहायनेषु
'श्रीविशाला' विशालेयं कालिदासस्य
'उज्जयिनी' विक्रमार्कस्य
'अवन्तिका' राजशेखर-भोजराजयोः
'पुष्पकरण्डिनी' चार्हतानां
कतिधैव न समुत्सन्ना?
कतिधैव न पुनर्निर्मिता?
महाकालमेकं विहाय
किं किं न विपरिवर्तितं जातम्?
ध्वस्ताः खलु प्राचीनसौधाः
समुत्थिताः शिलीन्ध्रकल्पा नवाः
कालगल्ले विलीनाः परार्ध्यसम्पदः
निर्मिता नूतनराजपथाः
समागता अभिनवशासकाः
ह्यस्तना दरिद्राः
सञ्जाता अद्य लक्षपतयः
परन्तु रदनिके!
रोहसेनोऽहमद्यापि
नित्यनिर्मितमृच्छकटिकयैव
आत्मानं विनोदयामि !!९

रदनिके!
रक्तबीजतामुपगतः किन्तु
त्वद्युगीनश्शकारः
सोऽधुनापि स्वपरिजनैस्सह निर्भयं ढौकते
प्रतिपथं, प्रतिवीथिकं
प्रतिग्रामं, प्रतिनगरम्!
सर्वान् निर्दोषांश्चारुदत्तान्
पूर्ववदेव शातयत्यसौ सपत्नधिया
भोगलम्पटोऽसौ नरपशुः
हन्ति निर्दयं गलमाकुञ्च्य वसन्तसेनाम् !!१०

रदनिके!
न मया तस्यापकृतं किमपि
तथापि
चारुदत्ततनयोऽयम्
इति कृत्वैव शठोऽसौ
पादाभ्यां प्रहृत्य
भनक्ति मम मृच्छकटिकां
प्रतिप्रभातं
प्रतीकाराऽसमर्थोऽहम्
आदिवसं रोदिमि रदनिके!
किं करवाणि?
कस्मै कुप्यानि? कस्मै द्रुह्यानि?
कं वा शरणमुपयानि? ११

रदनिके!
शकारस्य भगिनी राज्ञो गृहे तिष्ठति
राजा चापि शकारस्य मुष्टिकायां निबद्धः
तत्को नु मह्यं न्यायं दास्यति?.
अरण्ये रोदिति रदनिके!

एष ते दुग्धमुखो रोहसेनः
ऊर्ध्ववाहुः क्लिन्नकञ्चुकः
सततरुदितोच्छूनननयनः
न च कश्चिच्छृणोति ॥१२

रदनिके!
ब्रूहि, त्वमेव ब्रूहि
किमहं करवाणि?
किमतः परं नोपयानि जननान्तरम्?
एकवारं, केवलमेकवारं
समागत्य
सत्यं श्रावय रदनिके!
सकृत्पुनस्सान्त्वय
रोहसेनं मां
स्वोत्सङ्गदुर्ललितदारकम् ॥१३

रदनिके!
यदि नाम सुवर्णशकटिकाऽवाप्तिवृत्तं
त्वयोदितं
मदुत्कण्ठाशमनमात्रलक्ष्यं स्यात्
यदि राष्ट्रेऽस्मिन्
सुवर्णशकटिका
चारुदत्तशिशुभिर्दुष्प्राप्यैव भवेत्
यदि च शकारशिशव एव
सुवर्णशकटिका-क्रीडनेऽधिकृताः स्युः
तर्हि पश्चिमोऽयं प्रणामाञ्जलिः
त्वदलीकव्याहरणाय!
माऽतितरां खेदं कार्षीः
रदनिके!
अलमलमतिमात्रं सन्तप्य
न प्रभवसि त्वं मद्भाग्यलिपिमन्यथाकर्तुम् ॥१४

सन्त्येव मत्सदृशाः
लक्षकोटिमिताश्चारुदत्तशिशवो भारतेऽस्मिन्
खण्डितवृत्तैर्डिण्डिकैरपहृताः ।
नृशंसैस्तैः खञ्जीकृत्य
अन्धीकृत्य वा
भिक्षाटने, तस्करकर्मणि नियोजिताः
विशालायां, दिल्ल्यां, मुम्बय्यां
महानगरेषु चान्येषु
कस्तानुद्धरिष्यति? १५

रदनिके!
तातप्यते वपुः
दन्दह्यते मनः
वम्भ्रम्यते कनीनिका
तद् विश्वसिहि मातः!
एष ते रोहसेनः
परमार्थतः पञ्चत्वमुपयियासति
इह शकारतन्त्रे भारते
अपुनरागमनाय !!१६

## वसन्तसेना

अहमस्मि वसन्तसेना
रम्भोज्जयिनी-वेशवाटस्य
मेनका विश्वामित्राणां
घृताची प्रमतीनां
प्रम्लोचा चापि कण्डूनां
मम भ्रूभङ्गे विलसत्यकुण्ठः कन्दर्पः
विब्वोके वर्षा
कुट्टमिते शरत्
किलकिञ्चिते निदाधः
सर्वर्तुमयी विलासवनिकाऽस्मि
वसन्तसेनाऽहमस्मि! १

मां कामयते शकारः
राजश्यालः संस्थानकः
किन्त्वहं कामये
दरिद्रसार्थवाहं
द्विजयुवकं चारुदत्तम् ।
इदमेव विडम्वनं रमणीजीवनस्य
कोऽप्यनभीष्टस्तां कामयते
सा च कमप्यभीष्टमपरम् ।
अस्मिन्नेव
अभीष्टाऽनभीष्टसङ्करे
वराकी नारी दुर्व्यवतिष्ठते
रामं रघुनन्दनमियेष वैदेही
ताञ्च रतिलम्पटो रावणः
द्वारकाधीशमियेष रुक्मिणी
ताञ्च निर्गुणशिशुपालः ।
हन्त, सनातनीयं परिपाटी
दुर्नियतेः पुरन्ध्रीणाम् ॥२

सर्वगुणसम्पन्नाऽपि
स्थानदोषात् कदर्थिताऽस्मि
श्मसानवापिकायाः कमलिनीव
शकारसेवको मां ब्रूते–
पश्य वसन्तसेने!
लतां गाहते काकोऽपि
नद्यां स्नाति सारमेयोऽपि
नौकायां तिष्ठति ब्रह्मक्षत्रेतरोऽपि
वसन्तसेने!
लतेव त्वमसि
नदीव त्वमसि
नौकेव त्वमसि
सर्वभोग्याऽसि त्वं भद्रे!
वेश्यासि, भज सर्वं
स्वीकुरु राजश्यालं शकारम् ॥३

श्रावं श्रावं
पिण्डपालितस्य
लालाटिकस्य
तस्य जरच्छ्वरस्य वचनं
रुद्धयन्ते श्वासाः
प्रज्ज्वलति नेत्रयोर्युगान्तदाहाग्निः
तथाऽपि मौनमाश्रित्य
शृणोमि तस्याधमस्य
निम्नोन्नतं वचनं
कथयामि चात्मगतम्–
मूढ!
श्मसानशाखोटक!
नाहमस्मि सर्वभोग्या
नाहमस्मि लता, नदी, नौका वा
यां गाहते मयूर इव काकोऽपि

गज इव कुक्करोऽपि
विद्वानिव वैधेयोऽपि
अहमस्मि
गुणनिर्जिता दासी
कस्यचिच्चारित्र्यकल्पतरोः
सार्थवाहस्य
चारुदत्तस्य ॥४

चारुदत्तः
दीनानां कल्पवृक्षः
कुटुम्बी सज्जनानाम्
आदर्शःशिक्षितानां
निकषः सुचरितानां
समुद्रः शीलवेलानां
परिजनप्रणयाऽवसक्तः
योऽस्ति वात्याऽऽहतोऽपि निष्कम्पः
योऽस्ति विनष्टधनोऽपि सच्चरितः
क्व चासौ देवविग्रहश्चारुदत्तः
क्वःचायं राजश्यालश्शकारः?
निर्गुणो लम्पटः
क्षुद्रो दुर्मदः
वशीकृतशासनतन्त्रः
मूषिकीकृतनरपतिः
दुर्दान्त उद्धतः
यो न परिचिनोति नारीगौरवं
न जानाति प्रणयं
नाद्रियतेऽसौ जाल्मः
उभयनिष्ठतां भोगाऽकांक्षायाः
तत्कृते भक्ष्यभूतैवाऽस्मि
तत्कृते शरीरमात्रमहमस्मि ॥५

स च मां सन्दिशति–
मां भज वसन्तसेने!
परमार्थतोऽहमेवास्मि राजा
त्वां राजमहिषीं करिष्ये
अलङ्कारभारैस्त्वां गुर्वीं करिष्ये
कस्मात्कामयसे तं दरिद्रसार्थवाहम्?
विपद्यते यः क्षुत्क्षामकण्ठः
मिथ्यामहाजनोऽसौ
मैत्रेयमपि भोजयितुं न शक्तः
निदाघशुष्का पुष्करिणीव
निरुत्सवा यस्य भार्या धूता
मृच्छकटिकया क्रीडति यद्दारको रोहसेनः
प्रतिवेशशिशुसमृद्धिसन्त्रस्तः
गलितकुड्यं
निखातमूषिकविलं
गन्धमूषिकानिचितं
श्मसानमन्दिरमिव
यस्य जर्जरगृहम्!!
किमस्ति तस्य पार्श्वे त्वां प्रसादयितुं
वसन्तसेने!
किमस्ति तस्य पार्श्वे? ६

प्रतिसन्दिष्टम्मया–
चेट! भण राजश्यालं यद्
व्यंसकमयूर!
कलापिकलापधारणमात्रेण
न त्वं भवसि मयूरः!
मूढ! यत्तिष्ठति तवाऽधिकारे
वसन्तसेना
तत्सर्वं धूलिकल्पं मन्यते

तव प्रवहणं
तव पुष्पकरण्डकोद्यानं
धनवैभवञ्चातुलम्!
परप्रत्ययनेयबुद्धे!
आलाने गृह्यते हस्ती
वल्गासु गृह्यते वाजी
हृदये चापि गृह्यते नारी
केवलं हृदये !!७

परन्तु दुर्भाग्यशालिन्!
तत् हृदयमेव न तिष्ठति तवाधिकारे
त्वमसि शरीरमात्रं
त्वमसि वासनासमुच्चयः
त्वमस्यवृष्टभोगजलधरकल्पः
बिम्बफलमिवाऽखाद्योऽसि
पयोधिसलिलमिवाऽपेयोऽसि
कालकूट इवानास्वाद्योऽसि
श्मसानपिप्पलद्रुरिवानाश्रयणीयोऽसि
वृषल इवाऽस्पृश्योऽसि
विषधर इवानाश्लेष्टव्योऽसि ॥८

मिथ्याविभवगर्वित!
त्वं क्व स्थापयिष्यसि
मादृशीं विभवविरक्तां रमणीम्?
स्वभगिन्या राजसौधे?
स्वावुत्तस्य राजवैभवे?
स्वकदाचाराणां चन्द्रातपे?
स्वदुर्वृत्तानां दुर्गे?
मूढ शकार!
कामं जर्जरकुड्यं
कामं विभवविहीनं
तथापि तिष्ठति चारुदत्तस्याधिकारे

तस्य पैत्रिकं गृहं
किन्तु तवाऽधिकारे किं तिष्ठति?
यत् परमार्थतस्त्वार्जितं स्यात् ।
आवुत्तस्य वैभवम्
आत्मीयमिति प्रख्यापयन्
न मनाक् लज्जसे? ९

चारुदत्त एव मद्वांछाकल्पतरुः
स एव मत्कामनावियच्चन्द्रः
तस्य कलेवरे स्पन्दते
हैयङ्गवीनमसृणं हृदयं
पयोधिविस्तृतं हृदयं
नन्दनवनसमृद्धं हृदयं
यस्मिन् हृदयेऽसौ
स्वगुणशीलसमुदाचारवशीकृताः
मादृशीः
शतमिता वसन्तसेनाः
सुखं धारयितुं समर्थः ॥१०

संस्थानक!
परगुणाऽसहिष्णो!
न प्रत्यभिजानासि त्वं
दरिद्रसार्थवाहं चारुदत्तम्
दारिद्र्यमेव पश्यसि तस्य
न पुनस्तस्याक्षतसार्थवाहत्वम् ।
मूढ!
भाग्यक्रमेण धनानि भवन्ति, यान्ति
करतलमलकल्पं धनं
सततप्रक्षालितमपि
भूयोभूयः पुञ्जीभवति
क्षणभङ्गुरेयं विभवनिद्रा

माऽस्यां चिरं
निमज्जयाऽऽत्मानम्!
मनुजो मनुजान्तराद्
येन व्यतिरिच्यते
न किल तदस्ति धनं
मनुजो मनुजान्तराद् व्यतिरिच्यते
केवलं सद्गुणैः स्वैः !!११

मूढ संस्थानक!
त्वयि चारुदत्ते च
यदस्ति महदन्तरं
तदहं पश्यामि
चारुदत्तोऽस्ति सहृदयः
दुर्हृदयोऽसि पुनस्त्वं
असिद्धे सति स्वार्थे
मां निहन्तुमपि न त्वं सङ्कुचिष्यसि
परन्तु...........
निःस्वार्थप्रणयी मम चारुदत्तः
मन्निमित्तं
शूलमधिरोह्यमाणोऽपि
ध्रुवमनुभविष्यति
स्वजीवनसार्थकतामेव ॥१२

नरपशो! राजश्याल!!
रमणीं प्रति परिवर्तय दृष्टिं
समाद्रियस्व तां
यतस्सैव प्रसूते
त्वादृशं लम्पटं
शीलवन्तञ्चापि चारुदत्तसदृशम्
त्वादृशा एव विदधति तां मकररथ्यासम्पदं
सर्वजनभोग्यां

चारुदत्तसदृशाः पुनः
तां कुर्वन्ति स्वगृहयशोवैजयन्तीम् ।
रमणी पश्यति पुरुषपौरुषं
स्वपौरुषं सदर्थय!
रमणी कलयति पुरुषवाचिकं
स्ववाचिकं संस्कुरु
रमणी पश्यति पुरुषचरित्रं
स्वलम्पटतां नियंत्रय ॥१३

भद्र राजश्याल!
को नु लाभस्तव सुवर्णशकटिकया
या न प्रभवत्यारोहणसुखाय
न वा चिरं मनोरञ्जनाय
तदभ्यस्य
मृच्छकटिकयैव
चित्तं विनोदयितुं
भव निर्मदो निष्कलुषश्च
भव कामिनीहृदयज्ञः
चारुदत्ताऽपरपर्यायः
एवम्भूते
काचिदपरा वसन्तसेना
त्वामवश्यमेव
सम्भावयिष्यति ॥१४



## पत्रं श्रीबाणभट्टस्य

हर्ष!
कान्यकुब्जाधिपते!
स्वलालाटिकैरभिव्यक्तं
मिथ्याप्रचारितं मत्कौलीनं
सोत्कण्ठं त्वया श्रुतं
तन्मया सोढं
स्वराजसभायां
मां प्रविष्टमात्रं दृष्ट्वैव
महानयं भुजङ्ग इति त्वयाऽऽख्यातं
सर्वजनसमक्षं
तन्मया सोढं
ममान्तश्शुचि चैतन्यमविज्ञाय
ममानाथशैशवव्यथामविगणय्य
त्वया बहुशो ममोपहासः कृतः
तदपि मया सोढं
परन्तु
न सहिष्ये साम्प्रतं
देवाधिदेवस्य शम्भोरवमानं
न सहिष्ये वेदनिन्दां
न सहिष्ये त्वद्ब्राह्मणधर्मविद्वेषम् ॥१

गर्वितोऽसि त्वं शाखीभूय
सौगतमतावलम्बनेन?
पृच्छ स्वकीयं वंशमूलं
प्रभाकरवर्धनं
स कं धर्ममवललम्बे
स किमर्थमाजीवनमर्चितवान्
स्थाण्वीश्वरं शम्भुम्?
किमर्थमश्रौषीद्वेदान्
पर्यपूपुजद् ब्राह्मणचरणपङ्कजरेणून्
पर्यपालयत् सनातनधर्मदेशनाम् ।

गर्वितोऽसि त्वं तेन तथागतेन
यो गृहदायित्वमपि नो सम्पादयामास
तत्याज प्रसुप्तं दुग्धमुखं दारकं
यौवनभारभङ्गुराञ्च भार्यां
तनयवियोगकातरम्
अशक्तं वृद्धजनकं
क्लीव इवोद्विज्य संसारात्
यः प्राद्रवत् संसाररक्षार्थम्? २

हन्त कियदुपहासकरमिदं
यस्य रक्षा काम्यते
तत एव पलायनं क्रियते?
संसारं परित्यज्य संसारस्य रक्षा?
समरं विहाय समरविजयः?
किमुपलब्धं तव सिद्धार्थेन?
किमुपकृतं तव सिद्धार्थेन?
चत्वारि आर्यसत्यानि प्रागपि को न ज्ञातवान्?
किमेतानि पूर्वं नोपदिष्टानि
वेदेषु पुराणेषु काव्येषु?
तापत्रयनिवारणं
किं नोपदिश्यते सांख्यदर्शनेन?
अज्ञाननिवृत्तिः किं नोपदिश्यते वेदान्तेन?
तत्किमभिनवं प्रोक्तं सिद्धार्थेन?
राजन्! क्व तिष्ठति सिद्धार्थता तव सिद्धार्थस्य? ३

युवानोऽपि निर्वाणधिया
कर्तव्यपथं विहाय
श्रमणाः स्युः
किमयमेवोपकारस्सुगतस्य?
कस्तेभ्यो लम्बोदरेभ्यो भिक्षां दास्यति, किमर्थं वा दास्यति?

कस्तान् मयूरव्यंसकान् भोजयिष्यति?
वृद्धाः स्वेदाञ्चितवपुषः सश्रमं कृषकर्म कुर्वन्तु
निर्वाणकामा पुनरेते वलीवर्दा
अकृत्वैव किञ्चित्
सायं प्रातः
उदरम्भरि भक्षयन्तु
कुतस्त्योऽयं न्यायः? ४

हन्त, यस्मिन् कर्मयोगपक्षधरे राष्ट्रे
उपनिषदः समुद्घोषयन्ति
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति
तस्मिन्नेव भारतराष्ट्रे
कर्मणोऽयमवमानः?
पौरुषस्येदृशी गर्हणा?
हर्ष! धिक्तं धर्मं
धिग् धिक्तं सम्प्रदायं
यो लोकं क्लीवं विदधाति
यो लोकं कर्मपराङ्मुखं कुरुते
यो लोकं पराश्रयिणं परोपजीविनं साधयति ॥५

राजन् हर्षदेव!
निर्वाणं न वर्तते दायित्वनिवृत्तौ
निर्वाणं वर्तते दायित्वसम्पादने
कर्ममयीयं सृष्टिः
देवा अपि नितरां कर्मनिरताः
सूर्यस्तपति प्रतिक्षणं
अग्निर्ज्वलत्यहोरात्रं
प्रवहति पवनस्सततं
सर्वात्मा त्रिगुणात्मा कर्ममयो हरिः
स्वयमेव
क्षणमप्यकर्मकृन्न तिष्ठति ॥६

हर्ष!
किन्तव गौतमस्य काप्यन्या सृष्टि:?
कश्चिदन्य: संसार: ?
यत्र सर्वेऽपि श्रमणा एव वसन्ति
सर्वेऽपि परिव्राजका एव सन्ति
न कृषाणा: शिल्पकारा: श्रमजीविनो वा?
त्वन्निर्मितेषु
वहुभूमिकविहारेषु
सर्वसुखानन्दनिचितेषु
एते मुण्डितशिरस्का मल्ला:
स्वैरं विहरन्ति निश्चिन्तम्

पृच्छति बाणभट्टोऽयं
प्रजाप्रतिनिधि:
कस्यान्नं त्वमेतान् भोजयसि?
कस्य वस्त्राणि त्वमेतान् परिधापयसि?
एतत्सर्वं न तवाऽपि हर्ष!
सर्वमेतल्लोकस्य !!७

विद्विषसि शाश्वतं सनातनं वेदधर्मं
यो विनिर्ममे विश्ववारां संस्कृतिम्!
विद्विषसि तं जगदीश्वरं
य: प्रजानां जन्मनि रजोजुद
परिपालने सत्त्ववृत्ति:
प्रलये च तम:स्पृक् सन्दृश्यते
यतोऽयं निसर्ग:
यस्मिन्नयं निसर्ग:
यदवध्ययं निसर्ग: ॥८

सामान्यमनुजमेकम्
ईश्वरपदेन प्रख्यापयन् न लज्जसे?

सर्वतन्त्रस्वतन्त्रमीश्वरञ्च
प्रत्याख्यातुमुपक्रमसे?
परं साहसिकोऽसि
नूनमसज्जनोऽसि हर्ष!
सद्धर्माऽसहिष्णुरसि
महाहेर्दुर्विषमिवासह्यं ते वचः
बन्धनशृंङ्खलेव कटु क्वणन्
निरन्तरं तुदसि
असहृदयोऽसि हर्ष!
धावकादीन् परितोष्योत्कोचै–
स्तन्नाद्यैर्नाद्यकारोऽसि जातः
परं किमेतावता?
यदि कविहृदयमेव नावाप्तं
तर्हि व्यर्थमेवात्मप्रचारितं ते कवियशः
जीवति मयि बाणभट्टे
क्व ते कविराजिराजनिपुणता? ९

जीवन्नपि मृतोऽसि हर्ष!
स्वधर्मान्तरविद्वेषभावनया
मृतोऽस्यात्मसुभगम्मन्यतया
मृतोऽसि परगुणोत्कर्षाऽसहिष्णुतया
न त्वमर्हसि
नलरामयुधिष्ठिरोचितं चरिताऽनुशंसनम्
एष वात्स्यायनो बाणभट्टः सशपथं संकल्पते
न ते चरितं पूर्तिमेष्यति
जीवन्नेव त्वं स्मृतिशेषो भविष्यसि!! १०

●

# पूर्णां प्रति

पूर्णे!
कथमलसतनुश्शेषे?
न लहरीणां कलकलध्वनिः
न विहगानां कलरवः
न पाठीनानां समुच्छलनं
न जङ्घालत्वं प्रवाहाणां
भद्रे!
नेयं सलिलप्रवाहप्रकृतिः
न वा नदीलक्षणम् ॥१

पूर्णे!
प्राङ्मुखी शेषे त्वं
पादौ ते संस्पृशतः
नेदिष्ठं वारुणमहार्णवं
सान्द्रनारिकेलीवनात्
समुदयति पार्वणमृगाङ्कः
हृदयात्समुद्भूत इव सद्भावः
प्रतिबिम्बितोऽसौ
त्वज्जलराशौ
तव सौभग्यविन्दुरिव प्रतिभाति ।
अयि शयाने
जलधिनायिके!
ज्योत्स्नाऽऽच्छादितगात्री त्वं
प्रकामं शोभसे
विराजते तवोत्तरपुलिने
आलवाइ-वसतिः
जागर्ति दक्षिणपुलिने
एरणाकुलम्नगरी
मानिनि!
परिजनरक्षिता त्वं
शेषे निश्शङ्कम् ॥२

पूर्णे!
त्वदमलजलराशिमवगाह्य
सहसैव चिन्तयामि
क्वचिन्मामपि
न निगृह्णीयात्
मायाग्राहः कश्चित्
यतो नाहमवतीर्णोऽस्मि
आदिशङ्कर इव
अकालसंन्यासाय
सव्याजं वाऽमरुकीभूय
भोगसुखाऽस्वादनाय
अहमस्मि
लघुजीवमात्रं
प्रथमं भोगाद्वैतपरः
पश्चाच्च
ब्रह्माद्वैतपक्षधरः ॥३

पूर्णे!
शनैःशनैः, मन्दं-मन्दं
पदातिरेवाहं
गिरिशिखरमारोढुमिच्छामि
न पुनश्शिविकया
नाऽश्वतरेण
न वा सोपानसाहाय्येन
शतसहस्रप्रत्यवायवहुलाऽपि
यात्रा
स्वपादाभ्यामेव निर्व्यूढा
फलवती भवति
दत्तकपुत्रेण तेन को लाभः
यज्जनने जननी
नानुभवति प्रसवव्यथाम्?४

पूर्णे!
तव पुत्रः
कालटीग्रामाऽभिजनः
आदिशङ्करः
ब्रह्माद्वैतमतं प्रख्यापयन्
जीवनदर्शनदिग्विजयं चकार
पीठचतुष्टयञ्च स्थापितवान् भारतराष्ट्रे
ज्योतिष्पीठमुदीच्यां बदरीवने
शारदापीठमवाच्यां शृङ्गगिरौ
गोवर्धनपीठं प्राच्यां पुरुषोत्तमक्षेत्रे
द्वारकापीठं प्रतीच्यां प्रभासक्षेत्रे
कामकोटिपीठञ्च काञ्च्यामात्मार्थे
परन्तु
तच्चरणधूलिकणकल्पेन मया
संस्थापितं
गार्हस्थ्यपीठं स्वगृहाङ्गण एव
यत्राऽहमेवास्मि ब्रह्मकल्पः
पुत्रो मे ममांशभूतो जीवः
भार्या च मे
मम शक्तिभूता माया ॥
इदमेव गार्हस्थ्यपीठम्मां
शनैः शनैः
बन्धान्मोचयत्
रागाद् विरजयत्
आसङ्गात् निस्सञ्जयत्
मुक्तिं यावन्नेष्यति
अनवसरवैराग्ये
न मे विश्वासः ॥५

पूर्णे!
अद्यैव निपीतम्मया लोचनाभ्यां

गगनचुम्बि
नवभूमिकम्
आदिशङ्करस्मारकं
गौरवस्तम्भपीठं कालटीग्रामे
तदीयकुड्यासु वर्तुलासु
चित्राङ्किकतं
तज्जीवनघटनाचक्रं
दर्शं-दर्शं
जाते विलोचने मे
सतताश्रुवृष्ट्युन्मुखे
चिन्तितम्मया—
यदियमेव लघुग्रामटिकाऽस्ति
कालटी!
यया प्रसूतोऽसौ दिव्यशिशुः
सहस्रवर्षपूर्वं
यः कालटेयस्सन्नपि भारतपर्यायः सञ्जातः ॥६

यमादिदेश
मोक्षोपायप्रवचनाय
स्वयमानन्दकाननविहरणपरायणो
भगवान् काशीविश्वनाथ—
श्चाण्डालविग्रहः ।
यत्प्रणीतं वादरायणसूत्रभाष्यं
सानन्दमभिननन्द
भगवान् कृष्णद्वैपायनोऽपि
यस्मै व्यतरदाशीर्वचनं
स्वसौगतगुरुद्रोही
प्रायश्चित्तपरायण—
स्तुषाऽनलदग्धार्धतनु—
र्महामीमांसकः
आचार्यकुमारिलभट्टः ॥७

यमनुसृतवन्तौ
वर्षीयांसौ
मण्डनसनन्दनाऽपरपर्यायौ
सुरेश्वरपद्मपादौ
यद्वशंवदौ जातौ
तोटकहस्तामलकौ ॥
यद्वात्सल्यरसप्रह्वीभूता
त्वमप्ययि जननि पूर्णे!
मार्गं परिवर्त्य
कालटीं यावदागता
स्नपयितुम्
आदिशङ्करजननीं
जराऽतुरां गतिविधुराम् ।
यत्स्तवनमात्रेण
कनकधारां ववर्ष
कमलालया लक्ष्मीः
दारिद्र्यपीडिताया वृद्धाया गृहे ॥८

पूर्णे!
किं किमाख्यानि?
तादृशो ज्येष्ठो गरिष्ठो वर्षिष्ठो
महिष्ठः स्थेष्ठश्च शिशुः
न भूतले प्राग्जातो
न वाऽधुना जायते
ना चापि जनिष्यते भूयः
नात्र कश्चित् सन्देहो
यत्स्वयमेव भूतभावनो
भगवानाशुतोष एव
भारतवसुधामवततार
सद्धर्मसंस्थापनाय ॥९

स्वजनन्यै दत्तवचनः
संन्यस्तोऽप्यसौ शिशुः
मातृप्रणयं संन्यासादधिकं मेने
समायातोऽसौ कालटीं
तस्या महाप्रयाणवेलायां
विदेहमुक्तायाञ्च तस्यां
तवैव सैकते पुलिने
सम्पादितवानसौ
मातुरन्त्येष्टिम् ॥१०

नित्यस्नानपरायणां
स्वजननीं विनोदयन्
तव विस्तृतपुलिने विहरन्
तव सलिलमवगाहमानः
तव स्तुतिं कुर्वाणः
त्वयि ग्राहग्रहणलीलां नाटयन्
वात्सल्यकातरां जननीं प्रवञ्चयन्
तास्ताश्चान्या लीला विस्तारयन्
असौ बालक—
स्त्वयाऽवश्यमेव
असकृद् दृष्टस्स्यात्
मातः पूर्णे!
तत् कृपया मामपि दर्शय तं
सकृदेव स्वप्ने दर्शय तं
शिवविग्रहं शिशुं
मुक्तिकल्पतरुं
यथाऽहं
तज्जन्मभूमिदर्शनस्य
सत्फलपात्रतामुपयानि !!११

मातः पूर्णे!
त्वमसि साक्षिणी
समेषां तच्चरितानां
स वालकोऽस्तमितः
व्यतीतं तद्युगं
चेरचोलपाण्ड्यभूपतयोऽपि गताः
किन्तु त्वमद्याऽपि
तत्रैव स्थिताऽसि
यत्र पुराऽऽसीः
तत् साञ्जलिपुटप्रणामं
याच्यते मया
सकृद् दर्शय तं
शिवविग्रहं शिशुं
भारतपर्यायम् ॥१२

## महाराणाप्रतापसिंहं प्रति

हे हिन्दूकुलकमलसूर्य
हे स्वाभिमानचरमप्रमाण
चित्तौड़भूपते
महाप्राण!
शतलक्षकोटिनियुतायुतप्रयुतवन्दनीय
हे भारतजननी–परित्राण
हे सततगेय
हे द्विषदजेय
पृच्छति त्वामयं सस्नेहं
शारदासूनुरभिराजकविः
कस्मान्न गृहीता त्वया देव!
वैभवसरणिः जीवनतरणी
मुगलैस्सादरं सबहुमानं
सद्भावपुरस्सरमुपनीता?
एवंकरणे किमनौचित्यं
का विप्रतिपत्तिः को दोषः
किमिवासीदथवा लोकभयम्?
श्रूयते
राजनीतौ, प्रणये
जायतेऽभिनन्द्यं वरणीयं
सर्वं न्याय्यम्
उचिताऽनुचितम् ॥१

हे नीतिविशारद महामते
हे परमविलक्षण विशाम्पते
तत्कथं त्वया जानताऽप्यहो
कण्टकाकीर्णसंघर्षपथः
कान्तारदवानलकल्पोऽसौ
स्वीकृतः सर्वसुखतरुदाही!
स्वीययाऽऽलोकयष्ट्यैव विभो

सन्दीप्तं कस्मादात्मगृहम्?
मुगलाऽधिपत्यमाश्रित्य सुखं
कस्मान्न जीवनाऽमृतं वृतम्? २

सञ्जातमदृश्यं नयनाभ्यां
पूर्वजस्थापितं चित्रपुरं[1]
परिजनवदनाम्बुजविनिःसृता
मृदुकथा
अतिक्रान्ता श्रवणं
प्रच्युतं हन्त निखिलैश्वर्यं
कार्तस्वर-रजतपात्रजाते
भुञ्जानाः शिशवो दुर्ललिता
बुभुजुः क्षुत्क्षामास्तृषार्दिता
मृत्तिकाशरावे करपात्रे
पामरजनभोज्यं निःस्वादं
साधारणभोजनमुपोषिताः

हा हा धिग्दैवं कुलिशनिभं
यद् घासरोटिकामपि लघ्वीं
नृपदारिकया नु भुज्यमानां
हस्तादुन्मुच्य सझम्पमहो
सहसा वनमार्जारो हतकः
निभृतं वनराजिषु पलायितः ॥३

तत्करुणकरुणमाकर्ण्य देव!
क्रन्दनं सुताया दीनाया
अवलोक्य च मुक्ताफलवृहन्ति
लोचनाश्रूणि
हृदयं तवापि
संस्फुटितप्रायं सञ्जातं

१. चित्तौड़ इति।

लाजाः स्फुटन्ति यद्वद्भ्राष्ट्रे
प्रसभं तव नयनयुगेऽपि विभो!
आषाढजलधरास्समाययुः
क्षणमिव जातस्त्वं हतप्रभः
विपदूर्मिभङ्गुरस्तृणकल्पः
स्मारं-स्मारं सन्ततिदैन्यं
ध्यायं-ध्यायं महिषीपीडां
सम्मोहाविष्टमनस्कतया
लिखितं भवता नु सन्धिपत्रं
मौगलं शासकं समभिलक्ष्य ॥४

मार्तण्डं दृष्ट्वा भूपतितं
तुहिनाचलशिखरं शतद्रुतं
कूलङ्कषमथवा पयोनिधिं
वदरीफलितं वा कल्पतरुं
सञ्चकितो व्यथितः प्रधर्षित–
स्त्वत्पक्षधरः पृथ्वीराजः
शारदानन्दनो महाकविः
सम्प्रेष्य घनाक्षरिकां कवितां
वोधयाम्वभूव यथावसरं
निजगौरव–पौरुषरक्षणाय ॥५

त्वं पुनः प्रवुद्धस्सञ्जातः
व्युपशान्ते झञ्झाऽनिले यथा
कम्पितो महान्यग्रोधतरुः
दावाग्निपरीतोऽथवा कोऽपि
जलवर्षणतृप्तो महीधरः
आध्माता त्वयेदृशी ज्वाला
स्वातन्त्र्यभावभरितोदग्रा
यदरावल्याः किल शिला-शिला
दहदग्निपिण्डतां समाययौ

वज्रप्रहार इव वातरयो
ननु कुशोऽपि जातो व्याघ्रनखः
बब्बूलकण्टकश्शङ्कुमुखो
भल्लः सञ्जातः प्राणहरो
मरुवणं भीषणं मृत्युगृहं
सञ्जातं मुगलविनाशपरम् ॥६

आकुञ्च्य पौरुषं सकृत् पुन–
र्जनशक्तिं स्वीयां दृढव्रतां
लोकानुरागरञ्जितहृदयः
शतगुणोत्साहवलकरम्बितो
भामाशाहेनार्थसात्कृतो
वैतालिकगीतैर्नवीकृतः

हे प्रजापते साहसनिधान!
हे भारतभू-मङ्गलविधान!
निर्मितवानसि वहलं सैन्यं
संगृह्य समेषां साहाय्यं
कुलवृद्धानामाशीर्वचनं
प्रकृतीनामपि जयजीववच–
स्त्वं प्रलयमरुत्वानिव गर्ज–
न्नरिपृतनोपरि समपतः द्राक्
चेतक-पृष्ठारूढस्समरे
करवाल-भल्लमण्डितहस्तो
दृष्टस्समराङ्गणसूत्रधार!
बाप्पारावलवंशाभिमान!
त्वं शिशोदिया-पौरुषप्राण!
शिखिरूढः पिङ्गलोहिताक्ष–
स्तारकजिघांसुरिव षडाननः ॥७

त्वयि समुद्यते कीनाशनिभे
मौगलो विलिल्ये पराक्रमः
जनशक्तिसमक्षं नातिष्ठन्
व्यंसका भटा रजतक्रीताः
अस्ताचलमुपयातस्सहसा
मुगलेश्वराऽकवरयशोरविः
विजितं भवता लीलया पुनः
पैत्रिकसाम्राज्यं महामते!
समवाप मरुवणं सकृत्पुनः
माघवनीं नन्दनवनश्रियं
कण्टकाकीर्णवब्बूलानां
शुष्कप्राये वृन्ते-वृन्ते
सर्षपपीतानि सुमानि पुना
रेजिरे सुखोदयसूचकानि ।

हे कीर्तिशेष नायकविशेष!
त्वं दिवङ्गतस्सम्प्रति
तथापि
राष्ट्रं स्वातन्त्र्यरथाऽरूढं
संस्मरति यदस्ति कियन्मूल्यं
स्वातन्त्र्यमिदं भवता महितम् ॥८

## चन्द्रास्वामिन्




चन्द्रास्वामिन्
पृच्छति जनता
क्व गतं तव तन्त्रम्
थूत्क्रियसे त्वं पामरैरपि
मध्येसम्मर्दम्
क्व गता?
मन्त्रिवकानां मेला
क्वाऽनुयायिसक्तिः
क्व च करवद्धनिवेदनशंसितदैन्यानां भक्तिः?
अभितः परितः पुरः पृष्ठतस्ते
हाहाकारः
परिलक्ष्यते तवाकांक्षाभवने
स्वाहाकारः ॥१

यदि तन्त्राचारेण विभो!
सर्वं खलु वशीकृतम्
तन्त्रेणैव कथं न तर्हि
रिपुदलं त्वया दग्धम्?
कीदृशमहो नु तंत्रविधानं
त्वया साधु सिद्धम्
यत्त्वामेव संहरति शनकैः
शरो यथा गृध्रम् !!२
असकृन्नो सहतेऽनलदाहं हन्त काष्ठभाण्डम्[१]
त्वन्निदर्शनैरवगच्छति तत्सत्यमद्य राष्ट्रम्
अनुभव सम्प्रति कर्मविपाकफलं
भाग्योपनतम्
तव रौरवमत्रैव राजते
प्रत्यक्षोपगतम् ॥३

●

१. काठ की हाँड़ी बार-बार नहीं चढ़ती।

# लयेरिका (लोरी)

अणित-मणितनामून्यौ मयका खलु
द्वे वराटिके प्राप्ते
ते च पुनर्मङ्गललाभार्थं
गङ्गाधारायां प्रवाहिते
गङ्गा मह्यं ददौ बालुकां
सा च मया भर्जकाय दत्ता
लाजा मह्यं ददौ भर्जको
लाजास्ताश्च मया समर्पिता
घासोत्पाटकाय दीनाय
घासोत्पाटकोऽप्यसौ मुदितो
मह्यं प्रायच्छन्ननु घासं
घासास्ते धेनवे प्रदत्ताः
क्षीरं दत्तवती तैर्धेनुः
तेनैव क्षीरेण सत्वरं
मया निर्मितं स्वादु पायसं
दुर्ललितं दारकं शमयितुं
किन्तु पायसं जातं शीतं
विमनायितस्ततो मे कृष्णः
समुत्थाप्यतां नूतनभित्तिर्निपात्यतां प्राचीना चासौ
विधीयतामभिनवनिर्माणं
जीवतुतरां प्रियो मे वत्सः
वर्षायुष्यं शतप्रमाणम्
विलसतु मे लयेरिकागानम् !!

•

## अहमस्मि कविः

अहमस्मि कविः
शारदात्मजः
क्रान्तप्रतिभो नवरसरुचिरः
शब्दब्रह्मोपासनारतः
अभिरुचितसृष्टिवेधाश्चतुरः
स्वाधीनोपायोऽपराजितः
परिभूश्च स्वयम्भूः स्वयम्प्रभुः
कविरस्मि जगत्त्रयविलक्षणः ॥१

तरुमूलं वसुन्धरागर्भे
ननु कियद् गभीरं कियद् दृढम्?
कियदुत्तुङ्गं नीलाकाशे
गिरिशिखरं कियत्पुनस्तीक्ष्णम्?
शैतल्यं कियत्कीदृशं वा
निर्झरसरिदम्बुदबिन्दूनाम्?
दाहश्च कीदृशः
सूर्यवह्निवाडवसन्तापज्वालानाम्?
द्राक्षाऽपेक्षयाऽपि हन्त कियन्
माधुर्यं जननीचुम्बानाम्?
कुलिशाऽपेक्षया कियच्चण्डं
दुस्सहप्रहरणं दुर्वचसाम्?
इत्येवमादिशत-शतनिगूढपृच्छामर्माऽहं
परिचिनोमि
प्रस्तूय समाधानं शनकैः
स्तिमितं कोविदवृन्दं करोमि
जातोऽस्मि जगति केवलमेको जीवोऽहं
वन्धो!
स्वलक्षणः
कविरस्मि संसृतौ विलक्षणः ॥२

स्यामहं कथं जगदासक्तो
मदभीष्टं जगत् किमप्यन्यत्
स्यामहं कथं रूपासक्तो
मदभीष्टरूपमन्यत् किञ्चित्
ननु गन्धमृगोऽहं
ग्रन्थिपर्णप्रणयी
दूर्वा अश्नानि कथम्?
मानसविहारपटुवरटोऽहं
लघुपल्वलजलं पिवानि कथम्?
क्षुण्णः पन्था रोचते न मे
नूतनसरणिं तस्मात्सृजामि
सङ्कल्पनिर्मितायां सृष्टौ
प्रत्नेतरतरणिं विरचयामि
सत्यञ्च शिवं सुन्दरं जगत्
यत्नैर्लक्षैः कर्तुं प्रयते
जननान्तरार्जिता यां प्रतिभा
एतत्सर्वं च तया विदधे ॥

दुर्विज्ञेयं मामकं मनो
ननु दुराधिरोहाः संकल्पाः
दुर्व्याख्येयं विषमं चरितम्
अनितरतुल्याश्च समे जल्पाः
केचिन्मामृषिं विदन्ति मुदा
हस्तामलकीकृतजगत्त्रयम्
केचिच्चोन्मत्तं शून्यधियं
घुष्यन्ति च मां कुण्ठितक्रियम्
नाहं हृष्यामि न वा दूये
अनुशंसानिन्दा-पराङ्मुखः
हर्षे च विषादे समस्थितः
आत्मारामो जगतो विमुखः ।
सलिले नलिनीदलमिव नूनं

जीवनं ममास्मिन् संसारे
कैवर्तविहीनोऽहं पोतो
जलपोतोऽहं पारावारे ॥

कुत आयातः क्व च गन्तव्यं
कियदवधि पृथिव्यां स्थातव्यम्?
किं करणीयं किमकरणीयं
निर्मातव्यं किं गातव्यम्?
सर्वं ज्ञात्वाऽपि यते ज्ञातुं
को वा भविता मेऽन्तिमक्षणः
कविरस्मि संसृतौ विलक्षणः !!३

## शम्भो

शम्भो! कीदृशोऽयं न्यायस्तव सृष्टौ?
यद् यःकोऽपि धूलिकणः
पामरपादाहतः
स एवोत्थाय
पर्वतशिखरमवलम्बते
यश्चापि
भास्वरसुवर्णपिण्डः
स एव संसहतेऽसकृद् दाहव्यथां
ताडनदुर्यन्त्रणां
निकृन्तनादिपीडाम् ॥१

शम्भो! केयं परिपाटी तव सृष्टौ?
यत्तमोऽपसारिणं तरणिं
निशाविद्योतिनञ्च हिमांशुं
ग्रस्यतो राहुकेतू
पङ्को जनयति जलजं
जलजञ्च सूते शूकशिखान् कण्टकान्
आवेष्टयन्ति मलयजं सर्पाः
शैवलं शिरसां दधाति गाङ्गं जलं
कुज्झटिकां चाहर्मुखम् ॥२

शम्भो! कीदृशमिदमधरोत्तरं तव सृष्टौ?
यद् गर्दभा वहन्त्यलङ्कृतराजपुरुषान्
अश्वाश्च
पण्यभूतं लवणशाकतैलम् !
दुत्क्रियन्ते गृहद्वारमागता भिक्षुका
उत्सङ्गञ्चाधिरोप्यन्ते दुर्ललितसारमेयाः !
पूज्यन्ते भूतप्रेतपिशाचा
उपेक्ष्यन्ते पञ्चदेवाः ॥३
शम्भो!....................

## आकाशोऽहम्

आकाशोऽहम्
शृणुत शृणुत बन्धवो वाचिकम्
आकाशोऽहम्
अपरिमितोऽनन्तो निस्सीमः
दिक्परिवृतोऽहमालक्ष्ये यदि
परं न सत्यम्
नेदं सत्यम्
बुद्धिविवर्तोऽयं सन्द्रष्टुः
अशक्तेन्द्रियस्य मानवस्य!
नाऽहं परिवृतः
नाऽहमवसितः
नाऽपि समाप्तः
आकाशोऽहं निरवधिविपुलः
कूटस्थश्चाद्यन्त-विरहितः
आकाशोऽहम् ॥१

मय्युदयति कामनामृगाङ्को
लसत्प्रदोषे
इयं कामना चापि वर्धते
भूयोभूयः
एककलापरिमिता कामना
क्रमेण वर्धमाना
षोडशकलामिता नु जायते
परिसमापने ॥२

क्वचित्कामनेयं भोगानाम्
आत्मसुखानां सुहृत्सुखानां
विश्वशान्तिमङ्गलभावानां
क्वचिच्चापि परलोकसुखानाम्
क्वचित्कामनेयं प्रजायते
विहितोत्सङ्गमलिनतस्यात्मभुवस्तनुजस्य
क्वचित्पुनः

पातिव्रतभरिताया भार्यायाः
रूपशीलविभवप्रतिमायाः
क्वचिज्जनन्या
वत्सलतासुरसिन्धुनिभायाः
क्वचिच्च
सान्द्रानन्दलसत्कवितावनितायाः
कलामयीस्तास्ताश्च कामनाः
शतसहस्रलक्षाधिकसंख्याः
समानीय सञ्चित्य समुदयति
मय्याकाशेऽनिशं
मृगाङ्कः ॥३

मय्याकाशे
नित्यभास्वरो भाति भास्करो
द्रुतं विधुन्वन्
मोहतमिस्रां
ननु विभासयन्
ज्ञानिहृन्दि पाथोजनिभानि
ललितललाममयूखैः
स्वीयैः!!४

आकाशोऽहं
धृतमानवकलेवरः
मयि वर्तन्ते
निरवलम्बनान्यमितवनानि
पर्यटन्ति येष्वनारतं श्वापदा भीषणाः
क्रोधमोहमात्सर्यमदानाम्
मयि वर्तन्ते
प्रमदवनानि
स्वैरं यत्र पिकाः कूजन्ति
मोदन्ते च लसत्प्रणयानाम्
मधुसंकल्पानां सुन्दर्यो !!५

## वक्तव्यं शुष्कवृक्षस्य

यावज्जीवम्मया
स्वादुफलैर्भोजिता यूयं
परितोषिता यूयं
निषेविता यूयम् !
मद्विटपसञ्चयेऽधिसायं
विश्रान्तिं लेभिरे
प्रियाप्रसादनरताः शान्तपारावताः
चटुलचटकाः
कलहायमानाः कलघण्टाः
निविडनिशीथे दर्शितविक्रमा घूका
मौनमुपाश्रिता मौकुलयश्चः ।

समेषामेव नैशचरितमुपवीक्षमाणोऽहं
परं प्रसादभावमुपगतः
सन्ततिक्रीडां निरीक्षमाणः
आह्लादमेदुरो वत्सलो जनक इव ।

दिवससंव्यापिनी ममैकान्तता
गतिमद्भिर्विहिता स्थावरस्य ममोपेक्षा
श्मसानकल्पस्य मे दारुणता
प्रदोषे समासन्नप्राय एव
अपिहितकर्पूरराशिरिव द्रागेव विलुप्तः
प्रोषितकुटुम्बिनां सम्भूयसमागमेन
सहसैवापयाति यथा
वृद्धपितामहचरणस्य जिजीविषाऽपचितिः
कुटुम्बिकल्पानां पत्त्ररथानां समवायेन
पल्लवा मे प्रेङ्खोलनसौख्यमुपजग्मुः
चलत्पलाशा मे दिगङ्गनाताटङ्कभूता
हरितहरिता परमां विच्छित्तिं दधुः
स्कन्धे-स्कन्धे, वृन्ते-वृन्ते मे
नवयौवनसञ्चारस्समजायत ।

हा हन्त! ते हि मे दिवसा गताः
विषमहिमावपातो मया संसोढः
दुस्सहकरकाघातोऽपि मया संलक्षितः
परन्तु विषमोच्चावचम्
ऋतुप्रभावं शिरसा वहन्नप्यहं
महाकालमुपेक्षितुं नापारयम् ।
ममाऽप्यन्तस्समागतः
शुष्कतामुपेत्य मृतोऽहमद्य ॥
परं भो नाऽयं मृत्युर्निरर्थकः
निधनमपि सार्थकीकृत्य यास्याम्यहम्
ममदृढकाष्ठैः संघटयत पर्यङ्कान्
मम शाखावचयैः पचत पक्वान्नानि
तेनैवाहं पुनर्जीविष्यामि ॥

# उन्मत्तां प्रति

अहमदावादस्थे
अयष्मथस्थानके सा दृष्टा मया
स्वतनुमनारतं कण्डूयमाना
खरतरनखरै-
र्विविधमुखमुद्राभिः!
दक्षिणहस्तं पृष्ठाभिमुखं प्रसार्य
खर्जूस्थानमवाप्तुं
प्रयत्नातिशयं कुर्वत्यपि
स्थानमनवाप्य
असन्तुलनवशाद्वपुषः
चक्रवच्चरणाभ्यां परिभ्रम्य
आत्मनैवाऽत्मोपहासं विदधे सा
मलिनविरलदन्तपङ्क्तिं प्रदर्श्य ॥१

ततोऽकस्मादेव
कण्डूतिवृत्तं खलीकृत्य
न्यषीददसौ
सर्वजनोपेक्षिते
ताम्बूलगण्डूषोद्वमनशोणिते
छदिस्तम्भाधारभूते वर्तुलस्थण्डिले
ततस्समुद्गकान्निष्कासितवती
स्वकल्यवर्तं
विविधव्यञ्जनसमुच्चयकल्पं
यात्रिभुक्ताऽवशिष्टजातां
भूर्जितां, शष्कुलिकां, पक्ववटिकां, रोटिकाञ्च
साक्षिनिकोचं
साभिनिवेशञ्चाशित्वा
प्रणालतोऽसौ
जलमाकण्ठं पीतवती ॥२

समुद्गगात्ततोऽसौ
एकैकशो बहिरानेतुमुपचक्रमे
स्वबुद्धिसामर्थ्यैः पुञ्जीकृतानि वस्तूनि
प्रयुक्तक्षिप्तं स्नविताम्बुगोलं
रात्रौ विष्टरीकृत्य
परित्यक्तं समाचारपत्रं
रिक्तरिक्तं श्रीखण्डपिटकं
मध्यभुग्नव्वैकलं पादत्राणम्
अन्यत्किं किमिति
द्रष्टुं नाशकं
यतोहि
तावता कालेनैव
शीत्करी दध्मौ गन्त्रीरक्षकस्य
शनकैश्चाग्रेससार
अयष्पथगन्त्री ॥३

चिन्तितम्मया
यत्समेषामेव जीवने
सन्ति सहस्रमिता घटनाः
व्यतीता वर्तमाना भविष्यन्त्यश्च
परन्त्वस्या वराक्या जीवनं
कियन्निर्घटनम्?
कियदेकरूपम्? ४

●

# प्रकाशितम्

# अभिराजराजेन्द्रवाङ्मयम्

## ॥ SANSKRTA ॥

### A. MODERN SANSKRTA POETRY :

**महाकाव्यम्**

१. जानकीजीवनम् (२१ सर्गाः) — १९८८ ई.
२. वामनावतरणम् (१७ सर्गाः) — १९९४ ई.

**खण्डकाव्यम्**

१. आर्यान्योक्तिशतकम् — १९७५ ई.
२. नवाष्टकमालिका — १९७६ ई.
३. पराम्बाशतकम् — १९८१ ई.
४. शताब्दीकाव्यम् — १९८७ ई.
५. अभिराजसप्तशती — १९८७ ई.
६. धर्मानन्दचरितम् — १९९२ ई.
७. पञ्चकुल्या — १९९३ ई.
८. करशूलनाथमाहात्म्यम् — १९९६ ई.
९. कस्मै देवाय हविषा विधेम — १९९६ ई.
१०. अरण्यानी — १९९९ ई.
११. संस्कृतशतकम् — १९९९ ई.
१२. अभिराजसहस्त्रकम् — २००० ई.
१३. स्तवमधु — (मुद्रणालये)

**नवगीतसंग्रह :**

१. वाग्वधूटी (५५ गीतानि) — १९७८ ई.
२. मृद्वीका (५३ गीतानि) — १९८५ ई.
३. श्रुतिम्भरा (३८ गीतानि) — १९८९ ई.

४. मधुपर्णी (६८ गीतानि) २००० ई.
५. कौमारम् (५१ शिशुगीतानि) २००० ई.

## B. MODERN SANSKRTA DRAMA : (62 in all)

**एकाङ्किसंग्रह :**

१. नाट्यपञ्चगव्यम् (५ नाट्यानि) १९७१ ई.
२. अकिञ्चनकाञ्चनम् (१ नाट्यम्) १९७४ ई.
३. नाट्यपञ्चामृतम् (५ नाट्यानि) १९७७ ई.
४. चतुष्पथीयम् (४ नाट्यानि) १९८३ ई.
५. रूपरुद्रीयम् (११ नाट्यानि) १९८६ ई.
६. नाट्यसप्तपदम् (७ नाट्यानि) १९९६ ई.
७. नाट्यनवग्रहम् (९ नाट्यानि) १९९९ ई.
८. रूपविंशतिका (२० नाट्यानि) ------

**सम्पूर्णनाटिका :**

१. प्रमद्वरा (चतुरंकिका) १९८४ ई.
२. विद्योत्तमा (चतुरंकिका) १९९२ ई.
३. लीलाभोजराजम् (सप्ताङ्कनाटकम्) ------

## C. MODERN SANSKRTA FICTION :

**कथासंग्रह :**

१. इक्षुगन्धा (८ कथाः) १९८६ ई.
२. राङ्गडा ( ९ कथाः ) १९९२ ई.
३. चित्रपर्णी (६० लघुकथाः) १९९९ ई.
४. अभिनवपञ्चतन्त्रम् (मुद्रणालये)
५. पुनर्नवा (कथाः) ---------

## D. RESEARCH WORKS & TEXT BOOKS :





**शोधग्रन्थ :**

१. संस्कृत साहित्य में अन्योक्ति (शोधप्रबन्ध) १९८५ ई.
२. मणिकाञ्चन (१८ हिन्दी शोधनिबन्ध) १९८५ ई.
३. शास्त्रालोचनम् (१८ संस्कृत शोधनिबन्ध) १९९५ ई.
४. POETRY AND POETICS (अंग्रेजी शोधनिबन्ध) २००० ई.
५. सप्तधारा (सात शीर्षकों में विभक्त ५० निबन्ध) २००० ई

**पाठ्यग्रन्थ :**

१. किरातार्जुनीयम् (प्रथमसर्गः) (प्रथम संस्करण) १९७० ई.
२. कादम्बरीकथामुखम् (B. A. Class) १९७३ ई.
३. छन्दोऽलङ्कारसौरभम् (B.A. Class) १९८० ई.
४. रसनिरूपणम् (B.A. Class) १९८६ ई.
५. संस्कृतगद्यामृतम् (B. A. Class) १९९६ ई.
६. साहित्यदर्पण : (३ परिच्छेद) (B. A. Class) १९९९ ई.

## E. SOME DISTINCT WORKS :

1. SEJARAH KESUSASTRAAN SANSKERTA
*(History of Sanskrit in Bahasa Indonesia)*
First Ed. 1988, Denpasar. Bali, (INDONESIA)

२. Number of Rasas (रसों की संख्या)
(डॉ० राघवन्‌प्रणीत ग्रन्थ का हिन्दी रूपान्तरण)।
हरियाणा साहित्य-अकादमी चण्डीगढ़ द्वारा प्रकाश्य।

३. रामायर्णककविन् (यवद्वीपीय रामायण)
(देवनागरी लिप्यन्तरण, हिन्दी अनुवाद एवं विस्तृत भूमिका )
सम्पूर्णानन्द संस्कृत वि. वि. वाराणसी द्वारा प्रकाशित, १९९५ ई.

४. सुवर्णद्वीपीय रामकथा
राष्ट्रीय संस्कृत संस्थान, नई दिल्ली द्वारा प्रकाशित १९९६ ई.

५. बालीद्वीपे भारतीया संस्कृति :
ईस्टर्न बुक लिंकर्स, दिल्ली द्वारा प्रकाशित, १९९९ ई.

६. समीक्षासौरभम् (संस्कृत शोधनिबन्धाः) मुद्रणाधीनम्।

७. कस्मै देवाय हविषा विधेम (प्रकाशितम् १९९७ ई.)
देवस्तुति, महात्मस्तुति, विद्वत्स्तुति, राजस्तुति, सत्पुरुषस्तुति एवं प्रकीर्णस्तुति शीर्षकों में विभक्त प्रायः १०० अष्टक।

८. भारतीय संस्कृति का जीवन्त प्रतीक : बाली द्वीप
राष्ट्रीय संस्कृत संस्थान, नई दिल्ली द्वारा प्रकाशित। १९९९ ई.

९. ओङ्कारविज्ञानम् (साईदास बाबा-प्रणीतम्)
हिन्दी रूपान्तर एवं भूमिका (यंत्रस्थ)

१०. स्वर्णजयन्तीसंस्कृतकाव्यम्
(पञ्चाशन्मितानां मूर्द्धन्यकवीनां काव्यानि)
सम्पादन, संकलन एवं भूमिका। गुजरात राज्य संस्कृत अकादमी द्वारा प्रकाश्य (यंत्रस्थ) २००० ई.

११. विंशशताब्दीसंस्कृतकाव्यामृतम्।
(शताधिकसंस्कृतकाव्यकाराणां कवित्ववैभवम्)
सम्पादन, संकलन एवं भूमिका। दिल्ली संस्कृत अकादमी द्वारा प्रकाश्य (यंत्रस्थ) २००० ई.





प्रकाशितम्
# अभिराजराजेन्द्रवाङ्मयम्
## II HINDI & ENGLISH II

### काव्यसंग्रह
१. दो पात नींबू-तीन पात अमोला (६८ कविताएँ) १९६८ ई.
२. मुक्तधारा (२० गीत) १९७२ ई.
३. सपनों में डूब गया मन (५५ गीत) १९७२ ई.
४. पलकों के बन्द द्वार ( ५३ गीत) १९९० ई.
५. तटस्था (जनवादी कविताएँ) -------

### खण्डकाव्य
१. वेदना (भूमिका : पं० सुमित्रानन्दन पन्त) १९६६ ई.
२. पनघट (भूमिका : डॉ० रामकुमार वर्मा ) १९६७ ई.
३. मुक्तिदूत (हाईस्कूल के पाठ्यक्रम में निर्धारित) १९७५ ई.
४. पूर्णकाम (भरत पर आश्रित) १९७५ ई.
५. गृहत्याग (तथागत पर आश्रित) १९७५ ई.

### बालसाहित्य
१. बच्चों के पाहुन (पंचतंत्र की पद्यकथाएँ) १९७५ ई.
२. पढ़ो और बनो (सचित्र बालकथाएँ) १९७५ ई.
३. वन के गीत-मन के मीत (पद्यकथाएँ) १९७६ ई.
४. नया विहान (तीन एकाङ्की) १९७६ ई.
५. महाभारत की किशोरकथाएँ १९८१ ई.
६. तितली के पंख (३० शिशुकविताएँ) १९८२ ई.
७. रक्ताभिषेक (तीन एकाङ्की) १९८५ ई.

### भोजपुरी काव्यसंग्रह
१. फगुनी बयार (१२० गीत) १९९२ ई.

### गद्यवाङ्मय
१. विधवा (आञ्चलिक उपन्यास) १९७३ ई.
२. देवंरा हजारी ( कथासंग्रह ) १९९४ ई.

### सम्पादित ग्रन्थ
१. देववाणीसुवासः (दो भाग)
॥ डॉ० रमाकान्त शुक्लअभिनन्दनग्रंथ ॥ १९९३ ई.

२. प्रतानिनी (काव्यसंग्रहः)
   ॥ आचार्य बच्चूलालअवस्थी-प्रणीत ॥ १९९६ ई.

३. ब्रह्मविद्यारसायनम्
   ॥ आचार्य आद्याप्रसादमिश्र - अभिनन्दनग्रंथ ॥ २००० ई.

४. शिवशेखरसमज्ञा
   ॥ प्रो० शिवशेखरमिश्र - अभिनन्दनग्रन्थ ॥

## अप्रकाशितवाङ्मयम्

१. बद्रा भइल मोरा दूत (मेघदूत का भोजपुरी रूपान्तरण)
२. बिरहा के रैन (खण्डकाव्य )
३. सकुन्तला (भोजपुरी महाकाव्य)
४. गन्धमादन (राष्ट्रीय काव्यसंग्रह)
५. सुपर्ण (खण्डकाव्य)
६. पाषाणी (खण्डकाव्य)
७. त्रिणाचिकेत (काव्यरूपक)
८. अदृश्यन्ती (पौराणिक नाटक, तीन अंक)
९. दुर्योधनवध (मंचीय नाटक, पाँच अंक)
१०. रोदसी (महाकाव्य, १५ सर्ग अपूर्ण)
११. टिटनेसवार्ड की पाँच रातें (डायरी)
१२. हिमालय के आँगन में (यात्रावृत्त)
१३. मेरी प्रथम दक्षिणभारत-यात्रा (यात्रावृत्त)
१४. सुवर्णद्वीप में भारतीय वर्चस्व
१५. महाकाल की नगरी में (यात्रावृत्त)
१६. अस्थिकलश (खण्डकाव्य)
१७. नाच्यौ बहुत गोपाल (आत्मकथा)
१८. मृगाङ्कदूतम् (दूतकाव्यम्)
१९. बालीविलासम् (खण्डकाव्यम्)
२०. गीतभारतम्
२१. अभिराजचम्पूः
२२. काव्यतरङ्गिणी (संस्कृतसाहित्येतिहासः)
२३. छन्दोऽभिराजीयम् (अभिनवच्छन्दश्शास्त्रम्)
२४. अभिराजयशोभूषणम् (अभिनवकाव्यशास्त्रम्)



TM

vidyarthi k

विद्यार्थी स

HASH BAZAR,
EERUT CITY.
0121-2515615

9-10, D-WING, GREEN
OFF LINK ROAD, ANDH
MUMBAI. PH : 022-263

न-द्वि.आश्विन **OCT-2020** २०७७

| n | Mon | Tue | Wed | Thu | Fri | Sat |
|---|---|---|---|---|---|---|
| ni ti | 25th Dushehra | 30th Id-E- Milad | 31st Balmiki Jayanti | 1○ पूर्णिमा | 2 द्वि.आ.कृ.१ | 3 द्वितीया |
| | 5 तृतीया | 6 चतुर्थी | 7 पंचमी | 8 षष्ठी | 9 सप्तमी | 10 अष्टमी |
| 1 | 12 दशमी | 13 एकादशी | 14 द्वादशी | 15 त्रयोदशी | 16● अमावस्या | 17 द्वि.आ.शु.१ |
| 8 | 19 तृतीया | 20 चतुर्थी | 21 पंचमी | 22 षष्ठी | 23 सप्तमी | 24 अष्टमी |
| 5 | 26 | 27 | 28 | 29 | 30 | 31 |